ÂYURVEDÎYA GRANTHAMÂLÂ.

No. III.

# GADANIGRAHA

(PRAYOGA KHAND VOL. I.)

BY

VAIDYA SODHAL.

EDITED AND PUBLISHED

BY

VAIDYA JÂDAVJI TRICUMJI ÂCHÂRYA

No. 372, BORÂ BAZÂR STREET, FORT, BOMBAY.

1911 A. D.

*Price Rs.* 1½.



आयुर्वेदीयग्रन्थमाला

तृतीयं पुष्पम् ।

श्रीवैद्यसोढलविरचितो

# गदनिग्रहः ।

( प्रथमः प्रयोगखण्डः । )

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा

संशोधितः

प्रकाशितश्च ।

सं. १९६७.

मूल्यं सार्धरूप्यकः ।

# भूमिका।

गदनिग्रहकर्ताऽयं सोढलवैद्यो गुर्जरदेशनिवासी, रायकवालाख्यब्राह्मणजातीयः[1], वैद्यनन्दनपुत्रः, वत्सगोत्रोत्पन्नश्चेति तेन स्वविरचिते गुणसंग्रहापरपर्याये सोढलनिघण्टुनाम्नि ग्रन्थे प्रोक्तादात्मवृत्तान्तात्[2] प्रतीयते। स चायं सोढलवैद्यः कस्मिन् समये समजनीत्येतन्निर्णेतुं न किंचिदपि साधनमुपलब्धमस्माभिः। सोढलविरचितो गदनिग्रहव्यतिरिक्तो गुणसंग्रहापरपर्यायः **सोढलनिघण्टु**रिति प्रसिद्धोऽन्योऽपि ग्रन्थः समुपलभ्यते। तत्र धन्वन्तरिनिघण्टुराजनिघण्टुप्रभृतिष्वनुक्तानां प्रायो गुर्जरदेशप्रसिद्धानामेकशतद्रव्याणां नामानि सगुणान्यधिकान्युक्तानि। यद्यपि चिकित्साविषयकाश्चक्रदत्तवङ्गसेनयोगरत्नाकरप्रभृतयो बहवो ग्रन्था मुद्रितास्तथापि भूरिप्रयोगवत्वात्, सरलत्वाच्चायमेव सर्वानतिशेते। ग्रन्थेऽस्मिन् प्रयोग–कायचिकित्सा–शालाक्य–शल्य–भूततन्त्र–बालतन्त्र–विषतन्त्र–रसायन–वाजीकरण–पञ्चकर्माधिकाराख्या दश खण्डाः सन्ति। तत्र प्रथमे प्रयोगखण्डे घृततैलचूर्णगुटीलेहासवाख्याः षडधिकारा विद्यन्ते। तेषु षट्स्वधिकारेषु पञ्चाशीत्यधिकपञ्चशतमिताः प्रत्यक्षफलप्रदाश्चिकित्सायां नित्योपयोगिनश्च प्रयोगरत्ना उक्ताः। अत्रोक्तप्रयोगेषु बहवः प्रयोगा मुद्रितेषु चिकित्साग्रन्थेष्वनुक्ताः। अतोऽयं खण्डो वैद्यानां चिकित्सायामतीवोपयुक्तो भविष्यतीति पृथगेवायं प्रसिद्धीकृतः। ग्रन्थस्यास्य आदर्शपुस्तकद्वयमुपलब्धं; एकं अस्मत्परमसुहृदां स्वर्गवासिनां वैद्यसुरारजीशर्मणां,अपरं च बुन्दीनगरनिवासिनां राजवैद्यानां श्रीप्रसादशर्मणाम्। प्रथमोपलब्धपुस्तकापेक्षया द्वितीयेऽनन्तरमुपलब्धे पुस्तके यः पाठ अधिक उपलब्धः स परिशिष्टे संनिवेशितः। घृततैलचूर्णगुटीलेहासवानां परिभाषाः सोढलेनानुक्ता अप्यस्माभिर्ग्रन्थान्ते संनिवेशिताः। ग्रन्थस्यास्य शुद्धीकरणे यथामति कृतो यत्नः। तथापि भ्रमप्रमादादिवशाज्जातं स्खलनं क्वाप्युपलभ्येत चेत्सुधीभिः संशोधनीयं क्षन्तव्यश्चाहं, सफलीकर्तव्यश्च ममायं प्रयासो ग्रन्थस्यास्य पठनपाठनपर्यालोचनादिनेति॥

सं. १९६८ कार्तिकशुक्ल ११.<br>कोट होलीचकला मुंबई. } **यादवशर्मा.**

---

१. रायकवालब्राह्मणानां वसतिः सांप्रतं गुर्जरदेश एवोपलभ्यते। २. यथा—"वत्सगोत्रान्वयस्तत्र वैद्यनन्दननन्दनः। शिष्यः संघदयालोश्च रायकवालवंशजः॥ सोढलाख्यो भिषक् भानुपादपङ्कजषट्पदः। चकारेमं चिकित्सायां समग्रं गुणसंग्रहम्—" इति॥

# गदनिग्रहान्तर्गतविषयानुक्रमणिका ।

## गुटिकाधिकारश्चतुर्थः।

## लेहाधिकारः पञ्चमः।

## आसवाधिकारः षष्ठः ।

## प्रयोगखण्डस्य परिशिष्टम् ।

## परिशिष्टे घृताधिकारः प्रथमः ।

## परिशिष्टे गुटिकाधिकार-श्चतुर्थः ।



## परिशिष्टे पञ्चमोऽवले-हाधिकारः

# गदनिग्रहपाठसंशोधनम् ।

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| वन्ध्या च | वन्ध्यात्वं | २ | १८ |
| हिङ्गुतश्चाक्षमात्रेण त– | हिङ्गुश्चैषामक्षमात्रैस्त्व | ,, | १४ |
| पाण्डुरोगतां | पाण्डुरोगकं | ३ | १६ |
| सुकृतादितः | त्रिवृतस्तथा | ,, | २१ |
| दत्वा | दत्त्वा | ,, | २४ |
| नक्तमालं च | नक्तमालश्च | ४ | ८ |
| कटुरोहिणीम् | कटुरोहिणी | ६ | २५ |
| हपुषा | हपुषां | ८ | १९ |
| अजमोदा | अजमोदां | ,, | २० |
| कृष्णामजाजीपूतिकं | कृष्णामजाजीं पूतीकं | ,, | २१ |
| शुद्धात् | शुद्धेः[1] | १० | १९ |
| आगन्तुसहजाश्चैव शिरः– श्लिष्टाश्च ये व्रणाः | आगन्तुसहजांश्चैव शिरः– श्लिष्टांस्तथा व्रणान् | १३ | १ |
| निदिष्टं | निर्दिष्टं | ,, | २६ |
| –गोक्षुरकं तथा | –गोक्षुरकस्तथा | १४ | ४ |
| पृष्ठसर्पिणा– | पीठसर्पिणा– | ,, | १० |
| शूलहृत् | शूलहा | १५ | २६ |
| यष्टाह्वं | यष्ट्याह्वं | १७ | २ |
| चतुर्थभागो | तुर्यभागो | ,, | ३ |
| –बदराढके | –बदराढकम् | १८ | २ |
| द्रव्यानिमांश्चैव | दद्यादिमांश्चैव | ,, | ५ |
| एभिर्द्रव्यैर्घृतप्रस्थं | एतत्सिद्धं घृतप्रस्थं | ,, | १० |
| सभार्ग्गी | सभार्ग्गी | ,, | २५ |
| शिलाह्वयं | सुराह्वयं[2] | १९ | २ |
| देवदार्व्वद्धिः | देवदार्व्वद्धी | ,, | २० |
| जातीक्षीरक– | जातीक्षारक– | २० | १ |
| मारुतास्त्रक्प्रभेदि | मारुतासृक्प्रभेदि | ,, | १९ |

१ 'चात्र' ख । २ पाठान्तरम्

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| पिप्पली शर्करा द्राक्षा त्रिफला नी–लमुत्पलम् । | पिप्पलीशर्कराद्राक्षात्रिफला-नीलकोत्पलैः– | २१ | १० |
| मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका | मधुकक्षीरकाकोलीमधुपर्णी-निदिग्धिकैः | ,, | ११ |
| चित्रकं तथा | चित्रकस्तथा | २३ | ८ |
| अशीतिर्वातजान् | अशीतिं वातजान् | २३ | २१ |
| विंशतिः | विंशतिं | ,, | २२ |
| दाडीमयावशूकं | दाडिमयावशूकं | २५ | ३ |
| विषया | त्रिवृता | ,, | २२ |
| चाक्षकसंमितम् | चाक्षसंमितम् | २६ | २० |
| शिंशपाखदिरं तथा | शिंशपाखदिराक्षकान् | ,, | २६ |
| जीवकं च तथाऽक्षकम् | बीजकश्चूर्णमायसम् | ,, | २७ |
| विदारी | विदारीं | २७ | २५ |
| वचा | वचाम् | ,, | ,, |
| काकोलीमेदे | काकोलिमेदे | २९ | १९ |
| कृषातिवृद्धाः | कृशातिवृद्धाः | ,, | २७ |
| यौवनपुष्टिवन्तो | यौवनपुष्टिमन्तो | ३० | ७ |
| पेष्य विपाचयेत् | निष्पेष्य पाचयेत् | ३१ | ४ |
| सनागरकेशरैः | सनागकेशरैः | ३३ | २१ |
| –स्तदैकतः | –स्तदेकतः | ३४ | ११ |
| मृन्मयेऽपि | मृण्मयेऽपि | ,, | १६ |
| अशीतिर्वातरोगाणां | अशीतिं वातरोगाणां | ३५ | १२ |
| पलाशतं | पलशतं | ,, | २५ |
| अशीतिर्वातजान् | अशीतिं वातजान् | ३७ | १३ |
| विंशतिः | विंशतिं | ,, | १४ |
| मेधाम्निजनता शुभा | मेधाग्निजनताः शुभाः | ,, | १८ |
| तथा जनकपूजिता ।?) | तस्माज्जनसुपूजिता । | ,, | १९ |
| अशीतिर्नरनारीणां | अशीतिं नरनारीणां | ३८ | २ |
| कुष्ठमेलां चांशुमतीं | कुष्ठमेला चांशुमती | ४१ | ८ |
| –च्छक्ष्णकुट्टितम् | –च्छ्लक्ष्णकुट्टितम् | ,, | २२ |
| –कमलोत्पलैः | –कमलोत्पलम् | ४३ | १६ |

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| मिश्रितं तु | मिश्रितं | ५० | १८ |
| केशवर्धनं | केशवर्धनकरं | ,, | ,, |
| दन्तानावद्धमूलांश्च | दन्तानबद्धमूलांश्च | ५२ | १ |
| शिरीषाद्धितुले | शिरीषार्द्धे तुले | ५५ | १७ |
| स्याद्वृद्धः | तु वृद्धः | ६२ | ८ |
| समधुच्छिष्टो | समधूच्छिष्टो | ६५ | ४ |
| –गुल्मोदरादीनयं | –गुल्मोदरादीनिदं | ७० | ८ |
| नवस्य | नवानां | ७१ | १३ |
| आमातीसारशमनं | आमातीसारशमनः | ७३ | ९ |
| –शूलनुत् | –शूलहा | ,, | ,, |
| सुगन्धी हृद्यः क्षयरोहन्ता | सुगन्धिहृद्यः क्षयरोगहन्ता | ७६ | ७ |
| कामदयग्निवृद्धिं | कामदमग्निविवृद्धिं | ८१ | १८ |
| यथाक्रमकृतान् भागां– | यथाक्रमकृता भागा– | ८४ | ६ |
| कवलः प्रतिसारिणम् | केवलं प्रतिसारणात् | ८६ | ११ |
| वातश्लेष्मामयाहम् | वातश्लेष्मामयापहम् | ९१ | २४ |
| हिङ्गु | हिङ्गुं | ९३ | २६ |
| अशीतिर्वातजान् | अशीतिं वातजान् | ९४ | १९ |
| विंशतिः | विंशतिं | ,, | २० |
| संजनयेद्विमा– | संजनयेद्धीमा– | ,, | २४ |
| शक्तुमिः | शक्तुभिः | ९५ | २१ |
| दशेन्दुराज्या | दशेन्दुराज्याः | ९७ | ३ |
| खादेद्यथाग्निः | खादेद्यथाग्नि | ,, | ९ |
| द्विजीरकं | द्वे जीरके | १०० | ,, |
| पलमानि | पलमानानि | १०१ | २५ |
| क्षयविबन्धं | क्षयं विबन्धं | १०३ | ७ |
| पथ्याभिसहितं | पथ्याभिः सहितं | १०४ | ११ |
| स्थौल्याम्लवात– | स्थौल्यामवात– | ,, | २६ |
| तत्रैव भक्षयेत्कल्के | तत्रैकं भक्षयेत्कल्यं | १०५ | ११ |
| पार्श्वशूलसमरोचकम् | पार्श्वशूलमरोचकम् | १०६ | २२ |
| कृमिप्लीहानमुदरं | कृमीन् प्लीहानमुदरं | १०७ | १९ |
| सहिङ्गकर्षत्वणु– | सहिङ्गुकर्षं त्वणु– | १०८ | ७ |

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| –पाण्डाययारोचक– | –पाण्ड्वामयारोचक– | ,, | १० |
| पूत्वा | पूतं | ११० | २७ |
| स्वर्जिकसंज्ञिकं | स्वर्जिकसंज्ञकं | १११ | १६ |
| –युक्ताः खदिरगुटिकाश्च रोगघ्नयः | –युक्ता खादिरगुटिकाऽऽस्यरोगघ्नी | ११५ | १२ |
| मुखेन धारिता | मुखे सुधारिता | ११६ | ५ |
| वत्सनाभवल्लयुगं वल्लषट्कं त्रिकटुकचूर्णस्य | वत्सनाभं वल्लयुगं षड् वल्लानि त्रिकटुचूर्णस्य | ११६ | ७ |
| पिप्पलीमूलस्य | कृष्णामूलस्य | ,, | ८ |
| –र्दशमुली | –र्दशमूली | ११७ | ५ |
| –जब्वाम्रकपित्थं | –जम्ब्वाम्रकपित्थं | ,, | १६ |
| क्षिप्तोऽप्सु | क्षिप्तस्तु | ११८ | ४ |
| विंशतिः | विंशतिम् | ,, | २१ |
| व्याधिसमूह– | व्याधिगणं च | ११९ | २४ |
| हन्यादशासि | हन्यादर्शांसि | १२० | २२ |
| चेति | चैव | १२२ | १ |
| वलीपलितरोगरहितो | वलिपलितरोगरहितो | १२४ | ३ |
| रसायनवरिष्ठम् | रसायनश्रेष्ठम् | ,, | ५ |
| मधुत्रिफल– | मधुत्रिपल- | ,, | १३ |
| भुक्तैस्तथाऽभुक्तवति | भुक्ते तथाऽभुक्तवति | १२५ | १३ |
| उच्चटा | सूच्चटा | १२६ | २६ |
| भक्षयित्वा तु | भक्षयित्वा | १३० | २३ |
| नाडीव्रणाक्लेद– | नाडीव्रणक्लेद– | १३२ | ४ |
| पलमेकं | पलमेकं तु | ,, | २३ |
| उपयोस्त्रियो | उपयोगात्स्त्रियो | १४४ | १ |
| –चिरिबिल्वमूलं | –चिरबिल्वमूलं | १४६ | २ |
| त्रिकटुं तथा | च कटुत्रयम् | १४८ | २६ |
| मासद्वयोपयोगादेद्विनाशय– | मासद्वयोपयोगाद्विनाशय– | १५० | २ |
| एतान्येकपलीकानि | एतेषां पलिकान् भागान् | १५३ | २५ |
| तद्यथाग्निबलं | तं यथाग्निबलं | १५५ | २६ |
| –दौबल्यानाहनाशनः | –दौर्बल्यानाहनाशनम् | ,, | २७ |

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| यथाविधिः | यथाविधि | १६७ | ,, |
| तन्मात्रया | तं मात्रया | १७१ | १३ |
| पलविंशतिः | पलविंशतिम् | १७७ | ३ |
| –त्पेयं तत्र | –त्पेयस्तस्य | १७९ | २२ |
| विंशतिः | विंशतिम् | १८१ | २७ |
| आमहृत्कफहृद्रोग– | आमहा कफहृद्रोग– | १८२ | ११ |
| द्रवो पेयः | द्रवः पेयः | १८३ | २३ |
| नेत्रभेषज– | नेत्रभेषज– | १८६ | १३ |
| पलमितमिति | पलमिह हि | १९६ | १० |
| सूर्यातपे स्थाप्य ततस्तु | संस्थाप्य सूर्यातप एष | १९७ | ४ |
| प्रस्थमुत्तमम् | प्रस्थमुत्तमा | २०५ | १७ |
| अशीतिवातजाम् | अशीतिं वातजान् | २११ | १० |
| गजानां शिशूनामपि | शिशूनां दन्तिनामपि | ,, | ११ |
| –मञ्जिष्ठारवग्व– | –मञ्जिष्ठारग्वध– | २१८ | ७ |
| –गरादिशमनं | –गरादिदोषशमनं | २१९ | १६ |
| वचा । | वचा | २२० | ७ |
| दतांश्च | दन्तांश्च | ,, | १० |
| सिंहचूर्णम् । | सिंहणचूर्णम् । | २२३ | ६ |
| पित्तरक्तातिसारं | पित्तरक्तातीसारं | २२६ | ९ |
| चतुः पलमिदं | चतुः पलमितं | २२७ | २३ |
| भागश्चार्धस्तापितरोद्भवस्य | भागश्चार्धस्तापितीरोद्भवस्य | २२९ | १० |
| परिक्रुताम् | परिप्लुताम् | ,, | १४ |
| शोषे द्वितीयो | शोषे द्वितीयः | २३९ | १५ |

१ पञ्चमपृष्ठे एकादशपङ्क्त्यनन्तरं 'वाङ्गेरीस्वरसं तुल्यं दधि सर्पिश्चतुर्गुणम्' इत्यधिकं पठनीयम् ।

२ अष्टाविंशत्यधिकद्विशततमे पृष्ठे एकोनविंशतिपङ्क्त्यनन्तरं 'सर्वरोगानिह-न्त्याशु अनुपानविशेषतः' इत्यधिकं पठनीयम् ।

३ भूमिकायां चतुर्दशपञ्चदशपङ्क्त्योः 'नित्योपयोगिनश्च प्रयोगरत्ना उक्ताः' इत्यत्र 'नित्योपयोगीनि प्रयोगरत्नान्युक्तानि' इति पठनीयम् ।

समाप्तमिदं गदनिग्रहप्रयोगखण्ड शुद्धिपत्रम् ।

## गदनिग्रहकारेण प्रयोगखण्डे उपात्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि ।



# आयुर्वेदीयग्रन्थमाला ।

श्रीशोढलविरचितो

## गदनिग्रहः ।

मङ्गलाचरणम् ।

करकिशलयसङ्गी यस्य पीयूषकुम्भः
परममरवधूनां भूयसे मङ्गलाय ।
स खलु निखिलदुग्धाम्भोधिरत्नेषु रत्नं
हरतु दुरितराशीनाशु धन्वन्तरिर्वः ॥ १ ॥
त्रिभुवनजनरोगग्रामसंग्रामजेताऽ-
मृतभृतघृतकुम्भोद्गूर्णहस्तायुधश्रीः ।
अमरमथितदुग्धाम्भोधिलब्धोदयोऽसौ
दलयतु दुरितौघानाद्यवैद्याधिपो वः ॥ २ ॥
नानामुनिकृतैः श्लोकैः शोढलेनाल्पमेधसा ।
विबुधप्रतिबोधाय ग्रथ्यते गदनिग्रहः ॥ ३ ॥

ग्रन्थानुक्रमणिका ।

घृतं तैलं च चूर्णानि गुटीलेहौ तथासवाः ।
आदावेते ह्यनेकार्था ग्रन्थेऽस्मिन् गदनिग्रहे ॥ ४ ॥
ज्वरोऽतिसारो ग्रहणी चार्शोऽजीर्णं विषूचिका ।
अलसश्च विलम्बी च क्रिमिरुक् पाण्डुकामले ॥ ५ ॥
हलीसकं रक्तपित्तं राजयक्ष्मोरसः क्षतम् ।
कासो हिक्का सह श्वासैः स्वरभेदस्त्वरोचकः ॥ ६ ॥
छर्दिस्तृषा च मूर्च्छा च रोगाः पानान्मदात्ययः ।
दाहो वातविकाराश्च वातरक्तोरुरुक् तथा ॥ ७ ॥

आमवातस्तथा शूलं शूलं च परिणामजम् ।
जरत्पित्तमथानाह उदावर्तोऽथ गुल्मरुक् ॥ ८ ॥
हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाऽश्मरी ।
प्रमेहो मधुमेहश्च पिटिकाश्च प्रमेहजाः ॥ ९ ॥
मेदोदोषोदरं शोफो विद्रधिर्वृद्धिरेव च ।
कुष्ठं श्वित्रं शीतपित्तमुदर्दः कोठ एव च ॥ १० ॥
अम्लपित्तं विसर्पश्च विस्फोटोऽथ मसूरिका ।
इति कायचिकित्सायां मया रोगाः प्रकीर्तिताः ॥ ११ ॥
शालाक्ये शिरसो रोगाः कर्णनेत्रामयास्तथा ।
नासामुखामयाश्चैव द्वितीयेऽङ्के चिकित्सिताः ॥ १२ ॥
गण्डमालाऽपची गण्डः पिटिकार्बुदग्रन्थयः ।
श्लीपदं व्रणशोफश्च सद्योव्रणचिकित्सितम् ॥ १३ ॥
भग्ननाडीव्रणौ चैव भगन्दरोपदंशकौ ।
शूकदोषः क्षुद्ररोगाः शल्ये चाङ्के चिकित्सिताः ॥ १४ ॥
भूतोन्मादस्तथोन्मादस्तथाऽपस्मार एव च ।
भूततन्त्रे चतुर्थेऽङ्के सनिदानाश्चिकित्सिताः ॥ १५ ॥
प्रदरो योनिव्यापच्च गर्भास्रावचिकित्सितम् ।
मूढगर्भोऽथ वन्ध्यात्वं योनिशुक्रगदास्तथा ॥ १६ ॥
सूतिका स्तन्यदोषाश्च गाढनिर्लोमभेषजम् ।
बालरोगचिकित्सा च बालतन्त्रेऽथ पञ्चमे ॥ १७ ॥
सर्पलूतविषे चैव वृश्चिकोन्दुरुजं विषम् ।
नखदन्तविषं चैव स्थावरं कृत्रिमं विषम् ॥ १८ ॥
षष्ठे त्वङ्के विषाख्ये च प्रोक्तं चैषां चिकित्सितम् ।
रसायनं सप्तमं च वाजीकरणमष्टमम् ॥ १९ ॥
पञ्चकर्माधिकारे च स्नेहस्वेदविधिस्तथा ।
वमनं च विरेकश्च नस्यकर्मेत्यनुक्रमः ॥ २० ॥

---

## अथातो घृताधिकारः प्रारभ्यते ॥

### ज्वरे मञ्जिष्ठाद्यं घृतम् ।

मञ्जिष्ठाऽतिविषा पथ्या वचा नागररोहिणी ॥ १ ॥
देवदारु हरिद्रा च द्रोणेऽपां पलिकान् पचेत् ।
क्काथेऽस्मिन् साधयेत् पिष्टैर्घृतप्रस्थं पिचून्मितैः ॥ २ ॥
शृङ्गवेरकणाहिङ्गुद्विक्षारपटुपञ्चकैः ।
तत्कफावृतसर्वोत्थज्वरिणाममृतोपमम् ॥ ३ ॥
वर्ध्मगुल्मानिलश्वासकासपाण्डुविकारिणाम् ।
गलग्रन्थिप्रमेहार्शःप्लीहापस्मारशोफिनाम् ॥ ४ ॥
उदावर्तपरीतानां मन्दाग्निक्रिमिकुष्ठिनाम् ।

### द्वितीयं मञ्जिष्ठाद्यं घृतम् ।

मञ्जिष्ठा च हरिद्रा च देवदारु हरीतकी ॥ ५ ॥
शृङ्गवेरं ह्यतिविषा वचा कटुकरोहिणी ।
हिङ्गु[illegible]क्षमात्रैर्म तत्सिद्धमवतारयेत् ॥ ६ ॥
एतन्माञ्जिष्ठकं सर्पिर्बहून् रोगान्नियच्छति ।
हिक्कां श्वासं ज्वरं दुष्टं ग्रहणीं पाण्डुरोगताम् ॥ ७ ॥
प्रमेहान्मधुमेहांश्च क्रमीन् कुष्ठमरोचकम् ।
कासं शोषमुदावर्तमपस्मारं तथैव च ॥ ८ ॥
अर्शांसि श्वयथुं चैव गण्डमालां प्लिहोदरम् ।

### ज्वरे तिल्वकाद्यं घृतम् ।

तिल्वकस्य पलान्यष्टौ त्वचस्तु सुकृतास्तः ॥ ९ ॥
अंशुमत्युरुबूकं च बिल्वाद्यं च पृथक् पलम् ।
यवकोलकुलत्थानां प्रस्थं प्रस्थं फलत्रिकात् ॥ १० ॥
तत्साधयेज्जलद्रोणे चाष्टभागावशेषितम् ।
घृतप्रस्थं पचेत्तेन दत्वा दध्नस्तथाढकम् ॥ ११ ॥
कर्षेण यावशूकस्य पक्वं तदवचूर्णयेत् ।
एतत्तु तैल्वकं नाम जीर्णज्वरविषापहम् ॥ १३ ॥

कृमिकुष्ठहरं चैव शोफपाण्ड्वामयापहम् ।

जीर्णज्वरे हारीतात्कटुकं घृतम् ।

त्रिफलां पञ्चमूल्यौ द्वे कुलत्थान् बदरान् यवान् ॥ १३ ॥
द्विपलिकान् जलद्रोणे त्वष्टभागावशेषितम् ।
निःस्राव्य विपचेत्कल्कं दत्वा प्रस्थं च सर्पिषः ॥ १४ ॥
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ।
पुष्करातिविषे भार्गी शठी सप्तच्छदं वचा ॥ १५ ॥
रजन्यौ नक्तमालश्च पाठे द्वे शिग्रुतुम्बरु ।
सोमवल्कोऽर्कमूलानि मदनं कटुरोहिणी ॥ १६ ॥
तेजस्विनी सगोजिह्वा चन्दनं कण्टकारिका ।
किराततिक्तकं मुस्तं पटोलं सदुरालभम् ॥ १७ ॥
वयस्थां पिचुमन्दं च कटुकं हिङ्गुना सह ।
एतानक्षसमान् दत्वा क्षारौ ह्यर्धपलोन्मितौ ॥ १८ ॥
लवणानां च पञ्चानां कर्षं कर्षं प्रदापयेत् ।
सिद्धं तन्मात्रया पीतं सर्वजीर्णज्वरापहम् ॥ १९ ॥
हृत्प्लीहग्रहणीदोषश्वासकासार्शसां हितम् ।
गुल्मघ्नं कटुकं नाम कृष्णात्रेयेण पूजितम् ॥ २० ॥
दीर्घकालप्रयुक्तानां ज्वराणाममृतोपमम् ।

अग्निमान्द्ये अग्निघृतम् ।

भल्लातकान्पलशतं जलद्रोणे विपाचयेत् ॥ २१ ॥
चतुर्भागावशेषं तु कषायमवतारयेत् ।
त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥ २२ ॥
हिङ्गुचव्याजमोदं च पञ्चैव लवणानि च ।
द्वौ क्षारौ हपुषां चात्र दद्यादर्धपलोन्मितान् ॥ २३ ॥
मस्त्वम्लरसचुक्राणां प्रस्थं प्रस्थं प्रदापयेत् ।
आर्द्रकस्य रसप्रस्थं घृतप्रस्थं विपाचयेत् ॥ २४ ॥
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ।

अर्शांसि वातरोगं च प्लीहोदरजलोदरम् ॥ २५ ॥
ग्रन्थ्यर्बुदापचीशोफकुष्ठमेदोऽनिलांस्तथा ।
ये च कुक्षिगता रोगा ये च बस्तिसमाश्रिताः ॥ २६ ॥
तान् सर्वान्नाशयत्येतत्सूर्यस्तम इवोदितः ।

ग्रहण्यां चाङ्गेरीघृतम् ।

पिप्पली नागरं पाठा यवानी विश्वभेषजम् ॥ २७ ॥
भागांस्त्रिपलिकान् कृत्वा कषायमुपकल्पयेत् ।
भार्गी च पिप्पलीमूलं व्योषं चव्यं सचित्रकम् ॥ २८ ॥
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यवानिका ।
एतैः पलार्धकैर्द्रव्यैः कृत्वा कल्कं विपाचयेत् ॥ २९ ॥
पलानि सर्पिषस्तस्मिन् चत्वारिंशत्समावपेत् ।
मृद्वग्निना ततः साध्यं सिद्धं सर्पिर्निधापयेत् ॥ ३० ॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम् ।
शोफप्लीहोदरानाहमूत्रकृच्छ्रज्वरापहम् ॥ ३१ ॥
कासहिक्कारुचिश्वाससूदनं सर्वगुल्मनुत् ।

अग्निवेशात् गुदभ्रंशे द्वितीयं चाङ्गेरीघृतम् ।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥ ३२ ॥
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यवानिका ।
चाङ्गेरीस्वरसे सर्पिः कल्कैरेभिर्विपाचयेत् ॥ ३३ ॥
चतुर्गुणेन दध्ना तु तद्घृतं कफवातनुत् ।
अर्शांसि ग्रहणीरोगं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ ३४ ॥
गुदभ्रंशार्तिमानाहं घृतमेतद्व्यपोहति ।

गुल्मे दाधिकं घृतम् ।

बिडदाडिमसिन्धूत्थहुतभुग्व्योषजीरकैः ॥ ३५ ॥
हिङ्गुसौवर्चलक्षाररुग्वृक्षाम्लाम्लवेतसैः ।
बीजपूररसोपेतं सर्पिर्दधि चतुर्गुणम् ॥ ३६ ॥
साधितं दाधिकं नाम गुल्महृत् प्लीहशूलनुत् ।

गुल्मे हपुषाद्यं घृतम् ।

हपुषाव्योषमृद्वीकाचव्यचित्रकसैन्धवैः ॥ ३७ ॥
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद्घृतम् ।
सकोलमूलकरसं सदधिक्षीरदाडिमम् ॥ ३८ ॥
तत् परं वातगुल्मघ्नं शूलानाहविनाशनम् ।
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ॥ ३९ ॥
बाहुहृत्पार्श्वशूलं च घृतमेतद्व्यपोहति ।

अग्निवेशाद्रक्तपित्ते वासाद्यं घृतम् ।

समूलपत्रशाखस्य तुलां कुर्याद्वृषस्य च ॥ ४० ॥
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ।
कल्केन वृषपुष्पाणामाढकं सर्पिषः पचेत् ॥ ४१ ॥
तत्सिद्धं पाययेद्युक्त्या मधुपादसमायुतम् ।
श्वासं कासं प्रतिश्यायं तृतीयकचतुर्थकम् ॥ ४२ ॥
रक्तपित्तं क्षयं चैव विषं सर्पिर्नियच्छति ।

हारीताद्रक्तपित्ते महावासाद्यं घृतम् ।

वासकस्वरसे सर्पिः पयसा सह पाचयेत् ॥ ४३ ॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः ।
उदीच्यमधुकानन्तासारिवोत्पलपद्मकैः ॥ ४४ ॥
त्रायन्त्युत्पलमूर्वाभिर्मदयन्त्याश्च पल्लवैः ।
सिताक्षौद्रयुतं हन्याद्रक्तपित्तं सुदारुणम् ॥ ४५ ॥
पित्तं कासं च गुल्मं च स्वरभेदं हलीमकम् ।
ये चान्ये कीर्तिता रोगा रक्तपित्तकफाश्रयाः ॥ ४६ ॥
तान् सर्वान्नाशयत्येतत्पीयमानं हिताशिनः ।

हारीताद्गुल्मे दशाङ्गं घृतम् ।

यावशूकं वचा व्योषं विडङ्गं कटुरोहिणी ॥ ४७ ॥
सौवर्चलं हरीतक्यश्चित्रकं चाक्षसंमितैः ।
एभिः पचेद्घृतप्रस्थं दत्वा क्षीरजलाढकम् ॥ ४८ ॥

तत्पक्वं वातगुल्मघ्नं क्रिमिप्लीहज्वरापहम्।
कासहिक्कारुचिहरं दशाङ्गं नाम दीपनम् ॥ ४९ ॥

गुल्मे हारीताल्लशुनघृतम्।

लशुनाण्डस्य शुद्धस्य तुलार्धं निस्तुषस्य च।
तदर्धं पञ्चमूलस्य ह्याढकेऽपां विपाचयेत् ॥ ५० ॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा॥
दाडिमाम्लसुरामस्तुकाञ्जिकाम्लैस्तदर्धकैः ॥ ५१ ॥
साधयेत्त्रिफलादारुलवणव्योषदीप्यकैः।
यवानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्धकैः ॥ ५२ ॥
सिद्धमेतद्धविः कल्कैर्गुल्मार्शोजठरापहम्।
वर्ध्मपाण्ड्वामयप्लीहयोनिदोषज्वरापहम् ॥ ५३ ॥
वातश्लेष्मामयांश्चान्यान् घृतमेतद्व्यपोहति।

हारीताद्गुल्मे नाराचकं घृतम्।

चित्रकं त्रिफला दन्ती त्रिवृता कण्टकारिका ॥ ५४ ॥
स्नुहीक्षीरं विडङ्गानि घृतं दशममुच्यते।
एकैकस्य च कर्षेण घृतस्य कुडवं पचेत् ॥ ५५ ॥
चतुर्गुणेन तोयेन सम्यगेतत्सुखाग्निना।
तस्य काले पिबेन्मात्रां पलार्धसंमितां नरः ॥ ५६ ॥
उष्णोदकं चानुपिबेदल्पत्वादस्य सर्पिषः।
विरिक्ते च यवागूः स्यात्सर्पिषा परिवर्जिता ॥ ५७ ॥
रसेन वा जाङ्गलानां भोजयेन्मतिमान् भिषक्।
वातगुल्ममुदावर्तं प्लीहार्शोवर्ध्मकुण्डलम् ॥ ५८ ॥
ग्रहणीं दीपयेन्मेहान् कुष्ठदोषांश्च नाशयेत्।
नाराचमिति विख्यातं सर्पिर्नाराचसंज्ञितम् ॥ ५९ ॥
भैषज्यं संप्रयोक्तव्यं नाराचमिव शत्रवे।

कुष्ठे नीलिनीघृतम्।

नीलिनीं त्रिफलां रास्नां वचां कटुकरोहिणीम् ॥ ६० ॥

पचेद्विडङ्गं व्याघ्रीं च पलिकानि जलाढके ।
रसेऽष्टभागशेषे तु घृतप्रस्थं विपाचयेत् ॥ ६१ ॥
दध्नः प्रस्थेन संयोज्यं सुधाक्षीरपलेन च ।
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ॥ ६२ ॥
जीर्णे सम्यग्विरिक्तं च भोजयेद्रसभोजनम् ।
कुष्ठगुल्मोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ॥ ६३ ॥
श्वित्रं प्लीहानमुन्मादं हन्त्येतन्नीलिनीघृतम् ।

सिद्धसाराद्गुल्मे विश्वाद्यं घृतम् ।

पलांशैर्विश्वचव्याग्निपिप्पलीक्षारसैन्धवैः ॥ ६४ ॥
क्वाथेन चिरबिल्वस्य घृतप्रस्थं विपाचयेत् ।
गुल्मोदावर्तपाण्डुत्वग्रहणीश्वासकासजित् ॥ ६५ ॥
कुष्ठज्वरमतिश्यायप्लीहार्शःशमनं परम् ।

अग्निवेशाद्गुल्मे षट्पलं घृतम् ।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥ ६६ ॥
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत् ।
क्षीरप्रस्थेन संयुक्तं हन्ति गुल्मं कफात्मकम् ॥ ६७ ॥
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ।

हारीताद्गुल्मे महाषट्पलं घृतम् ।

सौवर्चलं पञ्चकोलं सैन्धवं हपुषां विडम् ॥ ६८ ॥
अजमोदां यवक्षारहिङ्गुजीरकमौद्भिदम् ।
कृष्णामजाजीपूर्विकं कल्कीकृत्य पलार्धतः ॥ ६९ ॥
शृङ्गवेररसं चुक्रं घृतप्रस्थं समीकृतम् ।
कृमिप्लीहोदराजीर्णज्वरगुल्मप्रमेहकम् ॥ ७० ॥
वातरोगं तथा शोफं दौर्बल्यं वह्निसंक्षयम् ।
महाषट्पलमातङ्कान् भिनत्त्यशनिवद्गिरिम् ॥ ७१ ॥

कुष्ठे भेडान्नीलं घृतम् ।

द्वौ प्रस्थौ लोहचूर्णस्य त्रिफला त्र्याढकं तथा ।

वायसीकाकमाचीभ्यां द्वे पले शङ्खिनीतुला ॥ ७२ ॥
त्रिद्रोणेऽपां विपक्तव्यं चतुर्भागावशेषितम् ।
घृतप्रस्थं पचेत्तेन गर्भं[1] चैनं समावपेत् ॥ ७३ ॥
वरुणं वत्सकफलं त्र्यूषणं देवदारु च ।
अवल्गुजफलं दन्तीफलान्यारग्वधस्य च ॥ ७४ ॥
निदग्धिका भृङ्गरजः पारावतपदी तथा ।
नीलकं नाम विख्यातमित्येतत्कुष्ठनुद्धृतम् ॥ ७५ ॥
श्वित्राणि रञ्जयेच्चैव पानाभ्यङ्गे प्रयोजितम् ।
पामाविचर्चिकासिध्मकिटिमानि च नाशयेत् ॥ ७६ ॥

भेडात्कुष्ठे महानीलं घृतम् ।

आरग्वधं वायसीं च बीजकं मदयन्तिका ।
एकैकस्य तुला देया प्रत्येकं त्रिफलाढकम् ॥ ७७ ॥
दन्ती दार्वी हरिद्रा च वरुणं कुटजत्वचम् ।
चित्रकं चार्कमूलं च काकमाची निदग्धिका ॥ ७८ ॥
एषां दशपलान् भागान् त्रिद्रोणेऽपां विपाचयेत् ।
अष्टभागावशिष्टं तु पुनरग्नावधिश्रयेत् ॥ ७९ ॥
धात्रीरसं वृषरसं जातीस्वरसमेव च ।
दधि सर्पिषश्च दुग्धं च गोमूत्रं गोशकृद्रसः ॥ ८० ॥
आढकाढकमेतेषां गर्भं चेमं समावपेत् ।
अवल्गुजं त्रिकटुकं नक्तमालफलानि च ॥ ८१ ॥
पिचुमर्दं च जात्याश्च पीलुतिल्वकपल्लवाः ।
किराततिक्तकं श्यामा नीलिकानीलपल्लवाः ॥ ८२ ॥
एतैः सिद्धं परिस्राव्य पाययेत्कुष्ठरोगिणम् ।
महानीलमिति प्रोक्तमेतत्कुष्ठापहं घृतम् ॥ ८३ ॥
भगन्दरमथार्शांसि कृमींश्चापि विनाशयेत् ।
अष्टादशैव कुष्ठानि सर्पिरेतन्नियच्छति ॥ ८४ ॥

---

१ गर्भमिति कल्कमित्यर्थः ।

अथर्वप्रहितो दीप्तो ब्राह्म्यो दण्ड इवासुरान् ।
विशेषतस्तु श्वित्राणि रञ्जयेच्च भिनत्ति च ॥ ८५ ॥
प्रसङ्गतः सेव्यमानं पानेनाभ्यञ्जनेन च ।

कुष्ठे त्रिफलाद्यं घृतम् ।

त्रिफला मदनं कुष्ठं शार्ङ्गेष्टा रजनीद्वयम् ॥ ८६ ॥
शुकनासा काकमाची हपुषाऽतिविषा वचा ।
पाठा कोशातकी मूर्वा तिक्ता काकादनी घृतम् ॥ ८७ ॥
एतत्कषायकल्काभ्यां सिद्धं पीतं घृतोत्तमम् ।
विशीर्यमाणं विध्वस्तस्नायुकेशनखं नरम् ।
कुष्ठातुरं तु जनयेन्मुमूर्षुमपि निर्गदम् ॥ ८८ ॥

हारीतात्कुष्ठे आवर्तकीघृतम् ।

आवर्तकीमूलशतं सुसिद्धं
काथीकृतं कल्कपलाष्टयुक्तम् ।
प्रस्थं पुराणाद्धविषः सुगव्यात्
पक्वं शनैः साधु तदावतार्य ॥ ८९ ॥
मात्रां पिबेद्व्याधिबलानुरूपां
भुञ्जीत चान्नं सह काञ्जिकेन ।
द्रवोत्तरं कोद्रवजं सुजीर्णे
कामं पुरस्तादपरेऽह्नि शुद्धः ॥ ९० ॥
त्रिसप्तरात्रं विधिनैवमाशु
पीतं निहन्यादचिरेण कुष्ठम् ।
स्रवद्व्रणं भग्ननखाङ्गदेहं
मण्डानुपूर्व्या विधिनाऽथ चैतत् ॥ ९१ ॥

अग्निवेशात्कुष्ठभ्रंशे चव्याद्यं घृतम् ।

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बरूणि च ।
यवानी पिप्पलीमूलमुभे च विडसैन्धवे ॥ ९२ ॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत् ।

शकृद्वातानुलोमार्थं जले दध्नश्चतुर्गुणे ॥ ९३ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।
गुदवंक्षणशूलं च घृतमेतद्व्यपोहति ॥ ९४ ॥

भेडात्प्रमेहे धान्वन्तरं घृतम्।

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी।
वर्षाभूर्वरुणो दन्ती चित्रकः सपुनर्नवः ॥ ९५ ॥
कपित्थोऽर्कसुधाक्षीरं बिल्वं भल्लातकानि च।
शठी पुष्करमूलं च पिप्पलीमूलमेव च ॥ ९६ ॥
पृथग्दशपलानेषां भागांस्तोयार्मणे पचेत्।
यवकोलकुलत्थानां प्रस्थं प्रस्थं प्रदापयेत् ॥ ९७ ॥
तेन पादावशिष्टेन घृतप्रस्थं विपाचयेत्।
निचुलं त्रिफला भार्गी रोहिषं गजपिप्पली ॥ ९८ ॥
शृङ्गवेरं विडङ्गानि वचा कम्पिल्लकं तथा।
गणेनानेन तत्सिद्धं पाययेद्धि यथाबलम् ॥ ९९ ॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम्।
कुष्ठं प्रमेहं गुल्मांश्च श्वयथुं वातशोणितम् ॥ १०० ॥
प्लीहानमुदरार्शांसि विद्रधिं पिडकांस्तथा।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ॥ १०१ ॥

खरनादात्कुमारकल्याणकं घृतम्।

शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीवको बला ॥ १०२ ॥
शठी दुरालभा बिल्वं दाडिमं सुरसा स्थिरा।
मुस्तं पुष्करमूलं च सूक्ष्मैला पिप्पली जलम् ॥ १०३ ॥
पाठा श्वदंष्ट्राऽतिविषा विडङ्गं दारु मालती।
मधूकपुष्पं खर्जूरं बदरं वंशरोचना ॥ १०४ ॥
कल्कैरेषां समांशानां घृतं क्षीरचतुर्गुणम्।
कषाये कण्टकार्याश्च साधयेत्सौम्यदैवते ॥ १०५ ॥

एतत्कुमारकल्याणं घृतरत्नं सुखप्रदम्।
बलवर्णकरं धन्यं पुष्ट्यग्निरुचिकारकम्॥ १०६॥
छायासर्वग्रहालक्ष्मीदन्तकर्णगदापहम्।
सर्वबालामयहरं मेध्यमायुष्यमुत्तमम्॥ १०७॥
रसायनमिदं सेव्यं विशेषाद्दन्तजन्मनि।

वाग्भटाद्ब्राह्मीघृतम्।

द्वौ प्रस्थौ स्वरसाद्ब्राह्म्या घृतप्रस्थं च साधयेत्॥ १०८॥
व्योषश्यामात्रिवृद्ब्राह्मीशङ्खपुष्पीनृपद्रुमैः।
ससप्तलाकृमिहरैः कल्कितैरक्षसंमितैः॥ १०९॥
पलवृद्ध्या प्रयुञ्जीत यावन्मात्रा चतुष्पलम्।
उन्मादकुष्ठापस्मारहरं वन्ध्यासुतप्रदम्॥ ११०॥
वाक्स्मृतिस्वरमेधाकृद्धन्यं ब्राह्मीघृतं शुभम्।

शूले बीजपूरकाद्यं घृतम्।

घृताच्चतुर्गुणो देयो मातुलुङ्गरसो दधि॥ १११॥
शुष्कमूलककोलाम्लकषायो दाडिमाद्रसः।
विडङ्गलवणक्षीरपञ्चकोलयवानिभिः॥ ११२॥
पाठामूलककल्कैश्च सिद्धं पूरकसंज्ञितम्।
हृत्पार्श्वशूलवैस्वर्यहिध्माश्वासभगन्दरान्॥ ११३॥
वर्ध्मगुल्मप्रमेहार्शोवातव्याधीन् विनाशयेत्।

कृष्णात्रेयाद्वणे महागौर्याद्यं घृतम्।

गौरी हरिद्रा मञ्जिष्ठा मांसी कटुकरोहिणी॥ ११४॥
प्रपौण्डरीकं मधुकं भद्रमुस्तं सचन्दनम्।
जातीनिम्बपटोलं च कारञ्जं बीजमेव च॥ ११५॥
कट्फलं समधूच्छिष्टं समभागानि कारयेत्।
पञ्चवल्ककषायेण घृतप्रस्थं विपाचयेत्॥ ११६॥
क्षीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत्।
एतद्गौरं महावीर्यं सर्वव्रणविशोधनम्॥ ११७॥

आगन्तुसहजांश्चैव शिरःश्लिष्टांश्च वै व्रणान्।
विषमामपि नाडीं च रोहयेच्छीघ्रमेव च ॥ ११८ ॥

रक्तपित्ते दूर्वाद्यं घृतम्।

दूर्वामुत्पलकिञ्जल्कं मञ्जिष्ठा चैलवालुकम्।
श्वेतदूर्वा तथोशीरं मुस्ता चन्दनपद्मकम् ॥ ११९ ॥
द्राक्षा मधूकयष्ट्याह्वं काश्मरी सितचन्दनम्।
पिष्टैस्तैः कार्षिकैर्द्रव्यैर्घृतप्रस्थं विपाचयेत् ॥ १२० ॥
अजाक्षीरं तण्डुलाम्बु पृथग्दद्याच्चतुर्गुणम्।
तत्पानं वमतो रक्तं नावनं नासिकागते ॥ १२१ ॥
कर्णाभ्यां यस्य गच्छेत तस्य कर्णौ प्रपूरयेत्।
चक्षुर्गते च रक्ते वै पूरयेत्तेन चक्षुषी ॥ १२२ ॥
मेढ्रपायुगते चापि बस्तिकर्म प्रयोजयेत्।
प्रवृत्ते रोमकूपेभ्यस्त्वभ्यङ्गे योजयेद्घृतम् ॥ १२३ ॥

वैदेहाख्यनेत्ररोगे महात्रैफलं घृतम्।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च।
पीडयित्वा वृषं बालं रसप्रस्थं च दापयेत् ॥ १२४ ॥
अजाक्षीरस्य च प्रस्थं, प्रस्थं तैः सर्पिषः पचेत्।
त्रिफला चन्दनं द्राक्षा पिप्पली मधुकं बला ॥ १२५ ॥
काकोलीक्षीरकाकोलीमेदामरिचसैन्धवैः।
शर्करा पुण्डरीकं च हरिद्रोत्पलनागरैः ॥ १२६ ॥
कल्कैः सिद्धं भिषग्दद्यान्नेत्ररोगविनाशनम्।
काचं शुक्रं नीलिकां च वर्त्मरोगांश्च नाशयेत् ॥ १२७ ॥
नक्तान्ध्यं नकुलान्ध्यं च कण्डुं पिल्लमथापि च।
अजकां तिमिरांश्चैव नेत्रस्रावांश्च दारुणान् ॥ १२८ ॥
त्रिफलासर्पिरेतद्धि पाननावनतर्पणैः।
विदेहराज्ञा निर्दिष्टं दृष्टिनैर्मल्यकारकम् ॥ १२९ ॥

वातव्याधौ शतावरीघृतम्।

शतावरीमूलशतं द्विद्रोणेऽपां विपाचयेत्।
अष्टभागावशेषेण घृतप्रस्थं विपाचयेत्॥ १३०॥
जीवनीयानि सर्वाणि रास्ना गोक्षुरकस्तथा।
शतपुष्पा वचा कुष्ठं सरलं सपुनर्नवम्॥ १३१॥
चन्दनं तगरं मांसी पद्मकं रक्तचन्दनम्।
सुरसं नागरं कृष्णा विडं नागरमुत्पलम्॥ १३२॥
एभिरक्षसमैर्भागैः क्षीरं दद्याच्चतुर्गुणम्।
बृंहणं वातपित्तघ्नं क्षतशोषज्वरापहम्॥ १३३॥
पङ्गूनां पीठसर्पिणामर्दितानां च शस्यते॥
पुंस्त्वोपघातिनां नृणां वन्ध्यानां चैव योजितम्॥१३४॥
बलवर्णकरं ह्येतदलक्ष्मीघ्नं प्रजाकरम्।
शतावरीघृतमिदमश्विभ्यां परिकीर्तितम्॥ १३५॥

सारस्वतं घृतम्।

समूलपत्रामादाय ब्राह्मीं प्रक्षाल्य वारिणा।
उलूखलेन संक्षुद्य रसं वस्त्रेण गालयेत्॥ १३६॥
चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत्।
औषधानि च पुष्पाणि तत्रेमानि प्रदापयेत्॥ १३७॥
हरिद्रा मालती चैव त्रिफला च हरीतकी।
एतेषां पालिकान् भागान् शेषाणां कार्षिकाः स्मृताः१३८
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वृषम्।
एतानि तु समालोड्य शनैर्मृद्वग्निना पचेत्॥ १३९॥
ततः पक्वं विजानीय क्षिप्रं तदवतारयेत्।
ततः प्राशितमात्रेण बधिरत्वं प्रणश्यति॥ १४०॥
सप्तरात्रोपयोगेन भवेत्कविरसंशयम्।
घृतं सारस्वतं नाम सरस्वत्या विनिर्मितम्॥ १४१॥

सन्तानार्थं फलघृतम्।

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा वचा।
अजमोदा हरिद्रे द्वे हिङ्गु तिक्तकरोहिणी॥ १४२॥
काकोली क्षीरकाकोली मूलं चैवाश्वगन्धजम्।
जीवकर्षभकौ मेदे रेणुका बृहतीद्वयम्॥ १४३॥
उत्पलं चन्दनं द्राक्षा पद्मकं देवदारु च।
एभिरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत्॥ १४४॥
चतुर्गुणेन पयसा विपचेन्मृदुनाऽग्निना।
एतत्सर्पिर्नरः पीत्वा स्त्रीषु नित्यं वृषायते॥ १४५॥
पुत्रं जनयते वीरं मेधाढ्यं पुष्करेक्षणम्।
वन्ध्या च लभते गर्भं श्यामा वेगात्प्रसूयते॥ १४६॥
या चैव स्थिरगर्भा स्यान्मृतापत्या तु या भवेत्।
अल्पायुर्जननी चैव या च सूत्वा पुनः स्थिता॥ १४७॥
एतदेव कुमाराणां सर्वाङ्गग्रहमोक्षणम्।
धन्यं यशस्यमायुष्यं कान्तिलावण्यपुष्टिदम्॥ १४८॥
ये च कल्याणके प्रोक्तास्ते चापीह गुणाः स्मृताः।
एतत्फलघृतं नाम ह्यश्विभ्यां परिकीर्तितम्॥ १४९॥

अग्निवेशात्क्षतक्षीणे श्वदंष्ट्राद्यं घृतम्।

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकट्तृणम्।
दर्भमूलं पृश्निपर्णी जीवकर्षभकौ स्थिरा॥ १५०॥
पालिकं साधयेत्तेषां रसे क्षीरचतुर्गुणे।
कल्कैः स्वगुप्ताजीवन्तीमेदकर्षभजीवकैः॥ १५१॥
शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृताद्वातपित्तनुद्धाही शूलहृत्॥ १५२॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः॥ १५३॥

कामलायां हारीताद्द्राक्षाद्यं घृतम्।

पिष्ट्वा गोस्तनिकायास्तु पलान्यष्टौ समावपेत्।
पुराणसर्पिषः प्रस्थं पचेत्क्षीरे चतुर्गुणे।
कामलापाण्डुरोगार्शोज्वरकासार्तिनाशनम्॥ १५४॥

वाग्भटात्कुष्ठे महावज्रकं घृतम्।

वासामृतानिम्बपटोलतिक्ताव्याघ्रीकरञ्जोदककल्कसिद्धम्।
सर्पिर्विसर्पज्वरकामलार्तिकुष्ठापहं वज्रकमामनन्ति॥ १५५॥

वाग्भटात्कुष्ठे महावज्रकं घृतम्।

त्रिफलात्रिकटुद्विकण्टकारीकटुकाकुम्भनिकुम्भराजवृक्षैः।
सवचातिविषाग्निकैः सपाठैः पिचुभागैर्नव वज्रदुग्धमुष्ट्या:१५६
पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः क्रूरे कोष्ठे स्नेहनं रेचनं च।
कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान्हन्यात्कृच्छ्रांस्तन्महावज्रकाख्यम्॥

अग्निवेशात्कुष्ठे तिक्तकं घृतम्।

निम्बपटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम्।
कुर्यादर्धपलांशान् पर्पटकं त्रायमाणां च॥ १५८॥
सलिलाढकसिद्धानां रसेऽष्टभागस्थिते क्षिपेत्पूते।
चन्दनकिराततिक्तकमागधिकात्रायमाणाश्च॥ १५९॥
मुस्तं वत्सकबीजं कल्कीकृत्यार्धकार्षिकान् भागान्।
नवसर्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम्॥ १६०॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयश्वयथुहारि।
विसर्पपामापिडकाकण्डूमदगण्डनुत्तिक्तम्॥ १६१॥

अग्निवेशात्कुष्ठे महातिक्तकं घृतम्।

सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम्।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम्॥ १६२॥
धन्वयवासं चन्दनमुपकुल्यां पद्मकं हरिद्रे द्वे।
षड्ग्रन्थां सविशालां शतावरीं सारिवे चोभे॥ १६३॥

वत्सकबीजं वासां मूर्वाममृतां किराततिक्तं च।
कल्कान्कुर्यान्मतिमान् यष्ट्याह्वं त्रायमाणां च॥ १६४॥
कल्कस्य चतुर्थभागो जलमष्टगुणं रसोऽमृतफलानाम्।
द्विगुणो घृतात्प्रदेयस्तत्सिद्धं पाययेत्सर्पिः॥ १६५॥
कुष्ठानि वातपित्तप्रबलान्यर्शांसि रक्तवाहीनि।
वीसर्पमम्लपित्तं वातासृक् पाण्डुतां गुल्मम्॥ १६६॥
विस्फोटकान् सपामानुन्मादं कामलां कृमीन् कण्डूम्।
हृद्रोगं ज्वरपिडकामसृग्दरं गण्डमालां च॥ १६७॥
हन्यादेतत्सद्यः पीतं काले यथाबलं सर्पिः।
योगशतैरप्यजितान्महाविकारान्महातिक्तम्॥ १६८॥

जतुकर्णात्कुष्ठे द्वितीयं महातिक्तकं घृतम्।

करञ्जसप्तच्छदपिप्पलीनां मूलानि कृष्णा मधुकं विशाला।
यवासकं चन्दनमुत्पलं च स्यात्त्रायमाणा कटुका वचा च॥१६९
उशीरपाठातिविषारजन्यः किराततिक्तं कुटजस्य बीजम्।
निम्बासनारग्वधमालतीनां पत्राणि मूलानि च कण्टकार्याः१७०
शतावरीपद्मकदेवदारुमुस्तानि कालीयककेसराणि।
वासागुडूचीनतसारिवाश्च बला पटोलं त्रिफला च मूर्वा॥१७१
नीपं कदम्बो धववेतसौ च कर्कोटकं पर्पटकं पयस्या।
वाराहकन्दं मदयन्तिका च ब्राह्मी समङ्गार्षभकं बला च॥१७२
एतैः समांशैरथ कार्षिकैश्च घृतस्य पात्रं विपचेन्नवं च।
द्रोणं जलस्याकलुषस्य दद्यात् पात्रद्वयं चामलकीरसस्य॥१७३॥
पक्वं प्रशान्तं गतफेनशब्दं प्रयोजयेत् कुष्ठहरं प्रशस्तम्।
तद्रक्तपित्तानिलसन्निपातविस्फोटपाल्यामयविद्रधीनाम्॥१७४
किलासकासज्वरगण्डमालाग्रन्थ्यर्बुदानि त्वथ वातरक्तम्।
हृत्पाण्डुरोगान् सभगन्दरांश्च निषेव्यमाणं नियमेन काले॥१७५
घृतं महातिक्तमिदं प्रशस्तं निहन्ति सर्वान् श्वयथूपदिष्टान्।

कृष्णात्रेयात् प्लीह्नि रोहीतकं घृतम् ।

रोहीतकात् पलशतं संक्षुद्य बदरार्धकम् ।
पाचयित्वा जलद्रोणे चतुर्भागावशेषिते ॥ १७६ ॥
घृतप्रस्थं समावाप्य छागं क्षीरं चतुर्गुणम् ।
द्व्यादि तस्मिन् [illegible]मांश्चैव सर्वान् कर्षसमन्वितान् ॥ १७७ ॥
व्योषं फलत्रयं हिङ्गु यवानीं तुम्बुरुं विडम् ।
अजाजीकुष्ठलवणं दाडिमं देवदारु च ॥ १७८ ॥
पुनर्नवां विशालां च यवक्षारं सपुष्करम् ।
विडङ्गं चित्रकं चैव हपुषां चविकां वचाम् ॥ १७९ ॥
एतत् सिद्धं [illegible]र्घृतप्रस्थं स्थापयेद्भाजने शुभे ।
पाययेच्च पलं मात्रां व्याधीन् शमयते हठात् ॥ १८० ॥
प्लीहं प्लीहोदरं चैव प्लीहशूलं तथैव च ।
हृच्छूलं पार्श्वशूलं च कुक्षिशूलमरोचकम् ॥ १८१ ॥
विबन्धशूलं शमयेत् पाण्डुरोगं सकामलम् ।
छर्द्यतीसारशूलघ्नं तन्द्राज्वरविनाशनम् ॥ १८२ ॥
रोहीतकघृतं ह्येतत् प्लीहानं शमयेद्द्रुतम् ।

क्षारपाणेः प्लीहनि बिल्वाद्यं घृतम् ।

बिल्वं पाठाऽभया धान्यं यवानी सैन्धवं विडम् ।
पञ्चकोलं समरिचं क्षारैश्चैभिर्घृतं पचेत् ॥ १८३ ॥
दध्ना चतुर्गुणेनैव शकृद्वातविबन्धनुत् ।
सर्वामप्लीहवातार्तिगुदभ्रंशरुजापहम् ॥ १८४ ॥

हारीतात् सर्वोदरे द्विपञ्चमूलाद्यं घृतम् ।

द्वे पञ्चमूल्यौ त्रिवृतानिकुम्भे ससप्तलं चित्रकशिग्रुमूलम् ।
कुरण्टबीजं त्रिफलां गुडूचीमेरण्डमूलं मदयन्तिकां च ॥१८५॥
पाठां सभार्गीं सुपवीं सनीलां सरोहिषां पापकुचेलिकां च ।
पृथक् पृथक् पञ्चपलं जलस्य द्रोणे पचेत्तच्चतुरंशशेषम्॥१८६॥
घृतं विपक्वं सकषायकल्कं निहन्ति पीतं सकलोदराणि ।

उदरे ब्राह्मं घृतम्।

शिलाद्वयं नागरकालशाके काकादनीमूलनिदिग्धिके च॥१८७
पञ्चैव दद्याल्लवणानि हिङ्गु कृष्णां च तैरक्षसमैः पृथक् च।
प्रस्थं घृतस्याथ पचेन्नवस्य चतुर्गुणं मूत्रमथ प्रदाप्य॥१८८॥
पयश्च दद्याद्द्विगुणं विपक्वं तद्ब्रह्मसृष्टं प्रवदन्ति सर्पिः।
प्लीहोदरं दूष्यमथाङ्गरोगं संसेव्यमानं जठरं निहन्यात्॥१८९॥

कासे कण्टकारीघृतम्।

पाठाविडव्योषविडङ्गसैन्धवत्रिकण्टरास्नाहुतभुग्बलाभिः।
शृङ्गीवचाम्भोधरदेवदारुदुरालभाभार्ग्यभयाशठीभिः॥ १९०॥
सम्यग्विपक्वं द्विगुणेन सर्पिर्निदिग्धिकायाः स्वरसेन चैतत्।
श्वासाग्निसादस्वरभेदभिन्नान्निहन्त्युदीर्णानपि पञ्चकासान्१९१

कासे द्वितीयं कण्टकारीघृतम्।

निदिग्धिकायाः स्वरसं ग्राहयेद्यन्त्रपीडितम्।
चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत्॥ १९२॥
गर्भं दद्यात्त्रिकटुकं रास्नां गोक्षुरकं बलाम्।
पञ्चकासानिदं सर्पिः पीतं सद्यो व्यपोहति॥ १९३॥

अग्निवेशात् कासे त्र्यूषणाद्यं घृतम्।

त्र्यूषणं त्रिफलां द्राक्षां काश्मर्यं च परुषकम्।
द्वे पाठे देवदार्वृद्धी स्वगुप्तां चित्रकं शठीम्॥ १९४॥
व्याघ्रीमामलकीं मेदां काकनासां शतावरीम्।
त्रिकण्टकं गुडूचीं च पिष्ट्वा कर्षसमान् घृतात्॥ १९५॥
प्रस्थं चतुर्गुणे क्षीरे सिद्धं कासहरं पिबेत्।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत्॥ १९६॥
कामलार्शोऽनिलार्तिघ्नं क्षतशोषक्षयापहम्।
त्र्यूषणं नामविख्यातमेतद्घृतमनुत्तमम्॥ १९७॥

कृष्णात्रेयाद्व्रणे गौर्याद्यं घृतम्।

गौर्यारिष्टपटोलरोध्रफलिनीयष्ट्याह्वनीलोत्पलै-
र्मञ्जिष्ठाकटुकेन्द्रवारुणिजपामूर्वानिशाचन्दनैः।

जातीक्षीरिकपत्रकेशरदलैः पूतीकघोटाफलै-
स्तुल्यैः सिक्थकसारिवाद्वययुतैर्गव्यं घृतं पाचयेत् ॥१९८॥
यष्टिक्षीरसपञ्चकोलजलदक्वाथैश्च गौर्यादिभिः
सिद्धं सर्पिरिदं हितं त्रिषु भवेत्सद्यःक्षतेषु ध्रुवम्।
ये गूढाश्चिरकालजातगतयः प्रोच्छिन्नमांसा व्रणाः
सस्रावाः सरुजः सदाहपिडिकाः शुष्यन्ति रोहन्ति च ॥१९९

भेडाद्गुग्गुलुतिक्तकं घृतम्।

निम्बामृतापटोलानां कण्टकार्या वृषस्य च।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ २०० ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
त्रिकटुत्रिफलामुस्तारजनीद्वयवत्सकम् ॥ २०१ ॥
शुण्ठी दारुहरिद्रा च पिप्पलीमूलचित्रकम्।
भल्लातकं यवक्षारं कटुकाऽतिविषा वचा ॥ २०२ ॥
विडङ्गं खर्जिकाक्षारः शतपुष्पाऽजमोदकम्।
एषामक्षसमैर्भागैर्गुग्गुलोः पञ्चभिः पलैः ॥ २०३ ॥
सुसिद्धं पीयमानं च एतद्गुग्गुलुतिक्तकम्।
विद्रधिं हन्ति सद्यो हि त्वग्दोषानपि दारुणान् ॥ २०४ ॥
कुष्ठानि स्वापसङ्कोचवेगवन्ति स्थिराणि च।
वातश्लेष्मसमुत्थानि मारुतासृक्प्रभेदि च ॥ २०५ ॥
गण्डमालार्बुदग्रन्थिनाडीदुष्टभगन्दरान्।
कासं श्वासं प्रतिश्यायं पाण्डुरोगं ज्वरं क्षयम् ॥ २०६ ॥
विषमज्वरहृद्रोगलिङ्गदोषविषक्रिमीन्।
प्रमेहासृग्दरोन्मादशुक्रदोषगदान् जयेत् ॥ २०७ ॥

हारीताच्छोषे द्राक्षाद्यं घृतम्।

द्राक्षायाः संमितं प्रस्थं मधुकस्य पलाष्टकम्।
पचेत्तोयार्मणे शुष्के पादशेषेण तेन च ॥ २०८ ॥
पालिके मधुकद्राक्षे पिष्टे कृष्णापलद्वयम्।

प्रदाय सर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणम् ॥ २०९ ॥
सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत् ।
एतद्द्राक्षाघृतं नाम क्षीणक्षुत्तृड्सुखावहम् ॥ २१० ॥
वातपित्तज्वरश्वासविस्फोटकहलीमकान् ।
प्रदरं रक्तपित्तं च हन्यान्मांसबलप्रदम् ॥ २११ ॥

विदेहात्सर्वनेत्ररोगे त्रिफलाद्यं घृतम् ।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च ।
पीडयित्वा वृषं बालं रसप्रस्थं प्रदापयेत् ॥ २१२ ॥
अजाक्षीरस्य च प्रस्थं कार्षिकैः श्लक्ष्णपेषितैः ।
पिप्पली शर्करा द्राक्षा त्रिफला नीलमुत्पलैः ॥ २१३ ॥
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिकैः ।
मञ्जिष्ठापद्मकोशीरसारिवादारुचन्दनैः ॥ २१४ ॥
घृतं प्रस्थं पचेत् प्राज्ञः कल्कैरेभिः समन्वितम् ।
ऊर्ध्वपानमधः पानं मध्ये पानं विशिष्यते ॥ २१५ ॥
अति प्रदुष्टे रक्ते च रक्ते वातिस्रुते तथा ।
नक्तान्ध्ये तिमिरे काचे सर्वनेत्ररुजासु च ॥ २१६ ॥
वकविद्योतितं भ्रान्तं सूर्यतेजोद्विषं तथा ।
गृध्रदृष्टिकरं धन्यं बलवर्णाग्निवर्धनम् ॥
त्रिफलाया घृतं सिद्धं सर्वनेत्ररुजान्तकृत् ॥ २१७ ॥

पटोलाद्यं घृतम् ।

पटोलं मधुकं दार्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां पर्पटकं त्रायन्तीं च पलोन्मिताम् ॥ २१८ ॥
प्रस्थमामलकानां च क्वाथयेत्सलिलार्मणे ।
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २१९ ॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः ।
सपिप्पलीकैस्तत् सर्पिश्चक्षुष्यं श्रोत्रयोर्हितम् ॥ २२० ॥
घ्राणकर्णाक्षिवर्मत्वग्दन्तरोगव्रणापहम् ।

रक्तपित्तहरं स्वेदक्लेदपूयोपशोषणम् ॥ २२१ ॥
कामलाज्वरवीसर्पगण्डमालाहरं परम् ।

कृष्णात्रेयाद्बिन्दुघृतम् ।

त्रिवृता त्रिफला पाठा दन्ती कटुकरोहिणी ॥ २२२ ॥
चतुरङ्गुलमज्जा च तथा च कटुकत्रयम् ।
चित्रकं च बृहत्यौ च तथा च गजपिप्पली ॥ २२३ ॥
स्नुहीक्षीरपलं दद्यात् घृतस्याष्टौ प्रदापयेत् ।
यावन्तः स पिबेद्बिन्दून् तावद्वेगान् विरिच्यते ॥ २२४ ॥
एतद्बिन्दुघृतं सिद्धमृषिभिः परिकीर्तितम् ।

कृष्णात्रेयाद्गुल्मे महाबिन्दुघृतम् ।

स्नुहीक्षीरपले द्वे च प्रस्थार्धं चैव सर्पिषः ॥ २२५ ॥
कम्पिल्लकपलं चैव शाणार्धं सैन्धवस्य च ।
त्रिवृतायाः पलं चैव कुडवं धात्रिजाद्रसात् ॥ २२६ ॥
तोयप्रस्थेन संयुक्तं शनैर्मृद्वग्निना पचेत् ।
वर्षप्रमाणं दातव्यं जठरे प्लीहगुल्मयोः ॥ २२७ ॥
तथा कर्णोत्थरोगेषु युञ्जीत कुशलो भिषक् ।
एतद्गुल्मादिनिचयान्समूलान् सपरिग्रहान् ॥ २२८ ॥
निहन्त्येष प्रयोगो हि वायुर्जलधरानिव ।
पञ्चगुल्मवधार्थाय सर्पिरेतत् प्रकीर्तितम् ॥ २२९ ॥
सर्वासुरवधार्थाय यथा वज्रं बिडौजसा ।
महाबिन्दुघृतं सिद्धं सर्वोदरहरं परम् ॥ २३० ॥

गुल्मे बिन्दुघृतम् ।

श्यामात्रिवृद्द्विपलत्रयं हि हरीतकीनां तु शतार्धमन्यत् ।
तोयार्मणोऽर्धेन विपाचितेन प्रस्थं पचेद्गव्यघृतस्य वैद्यः॥२३१॥
कम्पिल्लकस्यापि पलप्रमाणं सनीलिनीबीजपलद्वयं च ।
चतुष्पलं स्नुक्पयसश्च दत्वा गुल्मापहं बिन्दुघृतं विरेकात्॥२३२

चिकित्साकलिकाया गुल्मे महाबिन्दुघृतम्।

त्रिवृत्पलं स्नुक्पयसः पलं च कम्पिल्लकस्यापि पलं तृतीयम्।
चतुष्पलं चामलकीरसस्य पलार्धमन्यल्लवणस्य चैव ॥ २३३ ॥
प्रस्थार्धमेभिर्हविषो विपक्वं जले महाबिन्दुघृतं प्रसिद्धम्।
निहन्ति गुल्मं जठराणि चैव प्लीहामयानाशु विरेकयोगात्॥२३४

कुष्ठे बिन्दुघृतम्।

अर्कक्षीरपले द्वे तु स्नुहीक्षीरं पलानि षट्।
पथ्या कम्पिल्लकं श्यामा श्यामाकं गिरिकर्णिका ॥ २३५ ॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकं तथा।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ २३६ ॥
अथास्य मलिने कोष्ठे बिन्दुमात्रं प्रदापयेत्।
यावन्तो ना पिबेद्बिन्दून् तावद्वारान्विरिच्यते ॥ २३७ ॥
कुष्ठं गुल्ममुदावर्तं श्वयथुं सभगन्दरम्।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा ॥ २३८ ॥
एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते।

कुष्ठे पञ्चतिक्तकं घृतम्।

निम्बं पटोलं व्याघ्रीं च गडूचीं वासकं तथा ॥ २३९ ॥
कुर्यात्तुलां तु संचूर्ण्य क्वाथयेत्तज्जले शुभे।
पादावशेषेण ततो घृतप्रस्थं विपाचयेत् ॥ २४० ॥
त्रिफलागर्भसंयुक्तं पञ्चतिक्तकमुच्यते।
अशीतिर्वातजान् रोगांश्चात्वारिंशच्च पैत्तिकान् ॥ २४१ ॥
विंशतिः श्लेष्मजांश्चैव पानादेवापकर्षति।

खरनादाच्छूले लशुनघृतम्।

प्रस्थं लशुनबीजानां कण्टकार्यास्तथैव च ॥ २४२ ॥
आटरूषकप्रस्थं च जलद्रोणे विपाचयेत्।
द्राक्षाया गोस्तनायाश्च कुडवं चात्र मिश्रयेत् ॥ २४३ ॥
तत्र दद्याद्घृतप्रस्थं गोक्षीरप्रस्थमेव च।
लशुनस्य तु पिष्टस्य पलं निष्पीड्य योजयेत् ॥ २४४ ॥

आटरूषकपत्राणां पेषयित्वा पलं तथा ।
एतन्मृद्वग्निना सिद्धं सितं पूतमथापि वा ॥ २४५ ॥
द्विपलं शर्कराचूर्णं क्षीरार्धकुडवं तथा ।
त्वक्क्षीर्याश्च पलार्धं हि तत्सर्वं खजमूर्च्छितम् ॥ २४६ ॥
निदध्याद्भाजने शुद्धे काञ्चने राजतेऽपिवा ।
एतत्प्रायोगिकं[1] सर्पिरिमान् व्याधीन् व्यपोहति ॥ २४७ ॥
कासं श्वासं ज्वरं गुल्मं कार्श्यं छर्दिमरोचकम् ।
हृद्रोगं पार्श्वशूलं च क्षतक्षीणं प्लिहोदरम् ॥ २४८ ॥
जीवनं बृंहणं वृष्यं पाण्डुश्वयथुनाशनम् ।

तन्त्रान्तराद्दाडिमाद्यं घृतम् ।

दाडिमात्कुडवो धान्यात्कुडवार्धं पलं पलम् ॥ २४९ ॥
चित्रकाच्छृङ्गवेराच्च पिप्पल्यष्टमिका तथा ।
कल्कैस्तैर्विंशतिपलं घृतस्य सलिलाढके ॥ २५० ॥
सिद्धं हृत्पाण्डुगुल्मार्शः प्लीहवातार्तिशूलनुत् ।
दीपनं श्वासकासघ्नं मूढवातानुलोमनम् ॥ २५१ ॥
दुःखप्रसविनीनां च वन्ध्यानां चैव पुत्रदम् ।

चित्रकाद्यं घृतम् ।

चित्रकस्य तुलाक्काथे घृतप्रस्थं विपाचयेत् ॥ २५२ ॥
आरनालं च द्विगुणं दधिमण्डं चतुर्गुणम् ।
पञ्चकोलकतालीसक्षारैर्लवणसंयुतैः ॥ २५३ ॥
द्विजीरकनिशायुग्मैर्मरिचं तत्र दापयेत् ।
गुल्मप्लीहोदराध्मानपाण्डुरोगारुचिज्वरान् ॥ २५४ ॥
बस्तिहृत्पार्श्वकट्यूरुशूलोदावर्तजान् गदान् ।
निहन्यात् पीतमर्शोघ्नं पाचनं वह्निदीपनम् ।
बलवर्णकरं चापि भस्मकं च नियच्छति ॥ २५५ ॥

---

१ प्रायोगिकमिति प्रयोगः स्वस्थस्य सततोपयोगः, तत्र साधु प्रायोगिकम् ।

शोफे चित्रकाद्यं घृतम् ।

सचित्रकं धान्ययवान्यजाजीसौवर्चलव्यूषणवेतसाम्लम् ।
बिल्वोत्पलं दाडीमयावशूकं सपिप्पलीमूलमथापि चव्यम् २५६
पिष्ट्वाऽक्षमात्राणि जलाढकेन पक्त्वा घृतप्रस्थमथापि युञ्ज्यात् ।
अर्शांसि गुल्मान् श्वयथुं सकृच्छ्रं निहन्ति वह्निं च करोति दीप्तम्॥

प्लीह्नि तृतीयं रोहीतकघृतम् ।

रोहीतकत्वचः श्रेष्ठात्पलानां पञ्चविंशतिः ।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ २५८ ॥
पालिकैः पञ्चकोलैश्च तैः सर्वैश्चापि तुल्यया ।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ २५९ ॥
प्लीहाभिवृद्धिं शमयेदेतदाशु प्रयोजितम् ।
तथा गुल्मज्वरश्वासक्रिमिपाण्डुत्वकामलान् ॥ २६० ॥

कुष्ठे गुग्गुलुपञ्चतिक्तकं घृतम् ।

निम्बामृतावृषपटोलनिदग्धिकानां
भागानिमान्दशपलान्विपचेद्घटेऽपाम् ।
अष्टांशशेषितशृतेन पुनश्च तेन
प्रस्थं घृतस्य विपचेद्धृतभागकल्कैः ॥ २६१ ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिशिचव्यकुष्ठैः ।
तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ २६२ ॥
मञ्जिष्ठयाऽतिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः ।
तत्सेवितं विधुवति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ २६३ ॥
नाडीव्रणार्बुदभगन्दरगण्डमाला-
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।

यक्ष्मारुचिश्वसनपीनसशोफकास-
हृत्पाण्डुरोगमदविद्रधिवातरक्तान् ॥ २६४ ॥

शीतकल्याणकं घृतम् ।

कुमुदं पद्मकोशीरं गोधूमा रक्तशालयः ।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥ २६५ ॥
बलातिबलयोर्मूलमुत्पलं तालमस्तकम् ।
विदारी शतपत्री च शालपर्णी सजीवकम् ॥ २६६ ॥
फलं त्रपुसबीजानि प्रत्यग्रं कदलीफलम् ।
एषामर्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम् ॥२६७॥
पानीयं द्विगुणं दत्वा घृतप्रस्थं विपाचयेत् ।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके ॥ २६८ ॥
बहुरूपं च यत्पित्तं कामलां च सशोणितम् ।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥ २६९ ॥
तरुणा चानपत्या ये या च गर्भं न विन्दति ।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्धनम् ॥ २७० ॥
शीतकल्याणकं नाम परमुक्तं रसायनम् ।

हिक्काश्वासे शठ्याद्यं घृतम् ।

शठिर्वचाऽभया कुष्ठं पिप्पली बिल्वशुण्ठिका ॥२७१॥
पलांशं सैन्धवं चव्यं तेजोवत्यथ पुष्करम् ।
सौवर्चलं तामलकी भूतीकं चाक्षकसंमितम् ॥ २७२ ॥
हिङ्ग्वर्धकर्षकोपेतं घृतप्रस्थं विपाचयेत् ।
चतुर्गुणं जलं चात्र दत्वा मृद्वग्निना पचेत् ॥ २७३ ॥
ग्रहण्यर्शोहितं कासहिक्कोरःपार्श्वशूलनुत् ।
श्वासान् सन्धिगतांश्चान्यान् हन्याद्वातकफामयान् २७४॥

नारसिंहं घृतम् ।

वह्निर्भल्लातकं चैव शिंशपा खदिरं तथा ।
हरीतकीर्विडङ्गानि जीवकं च तथाऽक्षकम् ॥ २७५ ॥

एषामाहृत्य भागांस्तु सम्यग्दशपलोन्मितान् ।
जलद्रोणे युतं कृत्वा लोहभाण्डे निधापयेत् ॥ २७६ ॥
लोहभाण्डे पचेत्तावद्यावत्पादावशेषितम् ।
क्वाथं लोहयुतं कृत्वा स्थापयेद्दिवसत्रयम् ॥ २७७ ॥
त्रिगुणं तु शतावर्या रसं धात्र्याश्च निःक्षिपेत् ।
निःक्षिपेत्त्रिगुणं चात्र भृङ्गराजरसं शुभम् ॥ २७८ ॥
छागक्षीरं च तत्रैव त्रिगुणं च नियोजयेत् ।
पक्त्वा घृताढकं तेन मधुना सितयाऽथवा ॥ २७९ ॥
गुडेन वा पिबेत्सार्धं केवलं वा पलोन्मितम् ।
न किंचित्परिहार्यं स्याद्वातातपनिषेवणम् ॥ २८० ॥
अजीर्णे पिबतश्चापि वनितासेविनस्तथा ।
नान्धता नाग्निहानिश्च न वलीपलितं भवेत् ॥ २८१ ॥
अनेन च भवत्याशु नरः सिंहपराक्रमः ।
भवत्यश्वजवश्चैव हेमवर्णश्च जायते ॥ २८२ ॥
कान्ताऽपि सेविता तेन गुणैरेतैश्च युज्यते ।
नारसिंहमिति ख्यातं घृतं बलविवर्धनम् ॥ २८३ ॥

विषेऽमृतं घृतम् ।

शिरीषस्य त्वचं व्योषं त्रिफलां चन्दनोत्पलम् ।
द्वे बले सारिवास्फोटासुरभीनिम्बपाटलाः ॥ २८४ ॥
बन्धुजीवातसीमूर्वावासासुरसवत्सकम् ।
पाठाङ्कोलाश्वगन्धार्कमूलं यष्ट्याह्वपद्मके ॥ २८५ ॥
विशालां बृहतीं द्राक्षां कोविदारं शतावरीम् ।
कटभीदन्त्यपामार्गपृश्निपर्णीरसाञ्जनम् ॥ २८६ ॥
शणाश्वखुरकौ श्वेतौ कुष्टं दारु प्रियङ्गुकम् ।
विदारी मधुकात्सारं करञ्जस्य फलं वचा ॥ २८७ ॥
रजन्यौ लोध्रमक्षांशान् पिष्ट्वा साध्यं घृताढकम् ।
तुल्याम्बुच्छागगोमूत्रे त्र्याढके तद्विषापहम् ॥ २८८ ॥

अपस्मारक्षयोन्माद भूतग्रहगरोदरान् ।
पाण्डुरोगान् क्रिमीन् मेहान् सप्लीहोदरकामलान्२८९
हनुस्तम्भग्रहादींश्च पानाभ्यञ्जननावनैः ।
हन्यात्संजीवयेच्चापि विषोदधिमृतान्नरान् ॥ २९० ॥
अभेद्यममृतं सर्वविषाणां स्याद्घृतोत्तमम् ।

ग्रहण्यामग्निघृतम् ।

चतुष्पलं चव्यकचित्रपाठातेजस्विनीपिप्पलीमूलमेदाः ।
दद्याच्च मुस्तात्रिफलं विशुद्धं मुष्टिं समग्रामथ पल्लवानाम्॥२९१॥
आस्फोटजाती अथ सप्तपर्णं पटोलशाखोटकनक्तमालम् ।
निम्बं प्रदद्यादथ कल्कमस्मिन्नधिश्रयेत्ताम्रमये कटाहे ॥२९२॥
सुक्काथितं द्रोणजलेन पूर्णं पादावशिष्टं पुनरुद्धरेत्तत् ।
पलार्धतुल्याऽतिविषा सभद्रा कल्कीकृतानि द्विपलानि दद्यात् ॥
सयावशूकं बिडसैन्धवं च पलानि चत्वारि च पिप्पलीनाम् ।
कल्कैः कषायेण च सिद्धमेतन्मृद्वग्निसिद्धं ह्यवतारयेच्च ॥२९४॥
पिबेच्च जीर्णे तु घृतस्य कर्षं विष्टम्भदोषे द्विगुणं पिबेच्च ।
अनेन सर्वे ग्रहणीविकाराः शाम्यन्ति गुल्माश्च बहुप्रकाराः २९५
विंशत्क्रिमीणामथ जातयश्च शाम्यन्ति सर्वा विविधप्रयोगात् ।
पाण्ड्वामयप्लीहगरोद्भवाश्च रोगा भविष्याश्च समं व्रजेयुः ॥२९६॥
सेवेत मद्यं पिशितानि चैव विवर्जकः स्यान्मधुतर्पणस्य ।
नाम्ना तदप्यग्निघृतं प्रसिद्धं वह्निं च संदीपयते प्रसह्य ॥२९७॥

ग्रहण्यां भल्लातकाद्यं घृतम् ।

भल्लातकानां द्विपलं पलांशं विदारिगन्धादिकपञ्चमूलम् ।
जलाढके जर्जरितं विपाच्य विस्राव्य पूतं विपचेद्धि कल्कैः२९८॥
रास्ना बिडं सैन्धवयावशूकं विडङ्गकृष्णामधुकं वचा च ।
सविश्वकर्पूरहुताशहिङ्गु रास्नादिभिः पाणितलप्रमाणैः॥२९९॥
प्रस्थं विपक्कं पयसा समांशं घृतस्य योज्यं कफजे विकारे ।
प्लीहोदरे यक्ष्मणि वातरोगे श्वासे सकासे च हितं वदन्ति॥३००

व्यापन्नवह्नौ कफगुल्मिनां च कण्डूविकारेषु च शस्तमेतत्।
भल्लातकाख्यं नियमेन पीतं जयेच्च सर्वान् ग्रहणीविकारान् ३०१

जीर्णज्वरे पिप्पल्याद्यं घृतम्।

पिप्पल्यतिविषाद्राक्षासारिवाबिल्वचन्दनैः।
कटुकेन्द्रयवोशीरसठीतामलकीघनैः॥ ३०२॥
त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः।
पक्षेनैतैर्घृतं पक्कं विच्छिद्य विषमाग्नितान्॥ ३०३॥
जीर्णज्वरशिरःशूलगुल्मोदरहलीमकान्।
क्षयकासान् ससंतापान् पार्श्वशूलान्यपास्यति॥३०४॥

मायूरघृतम्।

हेमन्तकाले शिशिरे च सेव्यं वसन्तकाले च मयूरसर्पिः।
औष्ण्याद्धि बर्हीं विषभक्षणाच्च वर्षाशरद्ग्रीष्ममुखे व्यपास्य ३०५
आहारजातं हि विहङ्गमस्य कीटाश्च सर्पाश्च सरीसृपाश्च।
पिपीलिकामत्कुणमक्षिकाश्च तेनोष्णकालेष्वहितो मयूरः ३०६
तथैव काले जलदाभिरामे विसृज्य शुक्रं च मदं च बर्हीं।
कृशत्वमायाति हि हीनतां च शरन्मुखे तेन विवर्जनीयः३०७
अथाऽऽहरेत्स्वस्थमृतं वयस्थं निस्तुण्डपत्रान्त्रनखं मयूरम्।
द्विद्रोणमात्रे पयसो निधाय विपाचयेद्भेषजसंप्रयुक्तम्॥३०८॥
सश्रावणीमंशुमतीमनन्तां काकोलीमेदे वृषभे वयस्थाम्।
सविश्वदेवां सहदेवसाह्वां सप्तच्छदान्मूलफले बलां च॥३०९॥
शतावरीजीवकसोमवल्कमेकैकशः स्युः पलसंमिताश्च।
ततोऽर्धशिष्टे क्वथिते सुपूते घृताढकं तत्र पुनर्विपाच्य॥३१०॥
कल्कैरिमैः कर्षसमप्रमाणैर्द्रोणेन दुग्धस्य युतैः सुपिष्टैः।
मुञ्जातकाक्षोडमथात्मगुप्ता वृद्धिस्तथा तामलकी सवीरा ३११
पियालमज्जा मधुकं तथैव सिद्धं प्रशान्तं गतफेनशब्दम्।
पानेषु भोज्येषु च देयमेतद्भक्ष्येषु नानाप्रभवेषु चैव॥३१२॥
मन्दाग्निरेतोविषपीडिताश्च क्षीणक्षताश्चापि कृशातिवृद्धाः।

कासार्दिताः शोणितपित्तिनश्च पिबेयुरेते शिखिसर्पिरग्र्यम् २१३
वृष्यं च बल्यं च रसायनं च सर्वेन्द्रियाणां बलवर्धनं च ।
ओजःस्वरं प्रीणयते च गात्रं विषघ्नमेतद्गरनाशनं च ॥ २१४॥
एतेन वृद्धाः कृशदुर्बलाश्च तथैव वागध्वसमाहताश्च ।
प्रक्षीणवीर्याश्च रतिप्रसक्ताः स्त्रियः समागम्य वृषीभवन्ति २१५
हिमव्यपाये हिमदग्धपल्लवाः पुनः प्ररोहन्ति यथा महीरुहाः ।
पुनस्तथा यौवनपुष्टिवन्तो नरा भवन्तीह घृतप्रयोगात्॥२१६॥

तिमिरे जीवन्त्याद्यं घृतम् ।

तुलां पचेद्धि जीवन्त्या द्रोणेऽपां पादशेषिते ।
दत्वा चतुर्गुणं क्षीरं घृतप्रस्थं विपाचयेत् ॥ २१७ ॥
प्रपौण्डरीककाकोलीपिप्पलीरोध्रसैन्धवैः ।
शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ २१८ ॥
कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम् ।

अपस्मारे पञ्चगव्यं घृतम् ।

दशमूलेन्द्रवृक्षत्वङ्मूर्वाभार्गीफलत्रयैः ।
शम्याकश्रेयसीसप्तपर्णापामार्गफल्गुभिः ॥ २१९ ॥
शृतैः कल्कैश्च भूनिम्बत्रिफलाव्योषचित्रकैः ।
त्रिवृत्पाठानिशायुग्मसारिवाद्वयपौष्करैः ॥ २२० ॥
कटुकायासदन्त्युग्रानीलिनीक्रिमिशत्रुभिः ।
सर्पिरेभिश्च गोक्षीरदधिमूत्रशकृद्रसैः ॥ २२१ ॥
साधितं पञ्चगव्याख्यं सर्वापस्मारभूतनुत् ।
चतुर्थतुःक्षयश्वासानुन्मादांश्च नियच्छति ॥ २२२ ॥

ज्वरे महापञ्चगव्यं घृतम् ।

दशमूलमपामार्गं त्रिफलां कुटजत्वचम् ।
सप्तपर्णं हरिद्रे द्वे नीलिनीं कटुरोहिणीम् ॥ २२३ ॥
आरग्वधं मुष्ककं च फल्गुमूलं दुरालभाम् ।
पलांशकान्यपां द्रोणे साधयेत्पादशेषिते ॥ २२४ ॥

त्रिवृतां निचुलं भार्गीं श्रेयसीं मदयन्तिकाम्।
पूतीकं रोहिसं पाठां दन्तीं चित्रकमाढकीम् ॥३२५॥
किराततिक्तकं मूर्वां व्योषं द्वे चापि सारिवे।
सकषायं घृतप्रस्थमेभिः पेष्य विपाचयेत् ॥ ३२६ ॥
गव्यं शकृद्रसं क्षीरं तक्रं मूत्रं तथा दधि।
तदैकध्यं पचेत्सर्पिः सिद्धं चैवावतारयेत् ॥ ३२७ ॥
एतन्महापञ्चगव्यं विख्यातममृतं यथा।
चातुर्थकान्मोचयति मन्त्रसिद्धो मुनिर्यथा ॥ ३२८ ॥
श्वयथुं पाण्डुरोगं च प्लीहार्शः सभगन्दरम्।
उदराणि तथा गुल्मं कामलां चापकर्षति ॥ ३२९ ॥
तस्माद्भिषक् प्रयुञ्जीत विधियुक्तेन योगवित्।

बिन्दुसाराद्यं घृतम्।

शतावरीबलाराम्नादशमूलीत्रिकण्टकान्।
अश्वगन्धासमायुक्तान् कुशकाशसमन्वितान् ॥ ३३० ॥
दर्भेक्षुमूलसंयुक्तान् शरमूलविमिश्रितान्।
मण्डूक्या च समायुक्तान् द्विपञ्चपलिकान् भिषक् ३३१
पुनर्नवायाः श्वेतायाः शिफां पलशतोन्मिताम्।
जलद्रोणे प्रयत्नेन पचेत्सम्यक् चतुर्गुणे ॥ ३३२ ॥
पादावशेषे निःस्राव्य क्वाथमत्रावधिश्रयेत्।
यवानीपिप्पलीद्राक्षाशुण्ठीयष्ट्याह्वसैन्धवान् ॥ ३३३ ॥
द्विपालिकान् विनिःक्षिप्य श्लक्ष्णं पिष्ट्वा विधानतः।
घृतप्रस्थं पचेत्सम्यक् क्षीरप्रस्थद्वयान्वितम् ॥ ३३४ ॥
एरण्डतैलप्रस्थाढ्यं त्रिंशद्गुडपलैर्युतम्।
एतदीश्वरपुत्राणां राज्ञां चैव विशेषतः ॥ ३३५ ॥
स्त्रीसंभोगरतानां च प्राग्भोजनमनिन्दितम्।
ऊरुशूले कटिस्तम्भे योनिशूले च दारुणे ॥ ३३६ ॥
बस्तिवाते प्रवृद्धे च वातरोगे सुदुःसहे।

घृतमेतत्प्रशंसन्ति सुकुमारं रसायनम् ॥ ३३७ ॥

कासे दशमूलाद्यं घृतम्।

दशमूल्याढके प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशठीबिल्वसुरसाव्योषहिङ्गुभिः ॥ ३३८ ॥
पेयानुपानं तत्पेयं कासे श्वासे कफात्मके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ३३९ ॥

इति श्रीसोढलग्रथिते गदनिग्रहे घृताधिकारः प्रथमः।

---

## अथातो द्वितीयस्तैलाधिकारः प्रारभ्यते।

---

कुष्ठे कटुकालाबुतैलम्।

कटुकालाबुबीजं द्वे तुत्थे रोचना हरिद्रे द्वे।
बृहतीफलमेरण्डः सविशालश्चित्रको मूर्वा ॥ १ ॥
कासीसहिङ्गुत्र्यूषणसुरदारुतुम्बरुविडङ्गम्।
लाङ्गलकी कुटजत्वक् कटुकाख्या रोहिणी चैव ॥ २ ॥
सर्षपतैलं कल्कैर्मूत्रेण चतुर्गुणेन गवां सात्म्यम्।
कण्डूकुष्ठविनाशनमभ्यङ्गाद्वातकफहन्तृ ॥ ३ ॥

कुष्ठे भद्राद्यं तैलम्।

भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्धनैः।
गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन तु ॥ ४ ॥
ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम्।
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ॥ ५ ॥
पानाद्यैः शीलितं कुष्ठदुष्टनाडीव्रणापचीन्।

वातव्याधौ बलातैलम्।

बलाया जातसारायास्तुलां कुर्यात्सुकुट्टिताम् ॥ ६ ॥
पचेत्तोयचतुर्द्रोणे चतुर्भागावशेषिते।
पलानि दश पिष्टानि बलायास्तत्र दापयेत् ॥ ७ ॥

लुञ्चितानां तिलानां च दद्यात्तैलाढकद्वयम् ।
चतुर्गुणेन पयसा पाचयेन्मृदुनाऽग्निना ॥ ८ ॥
वातव्याधिषु सर्वेषु रक्तपित्ताश्रयाश्च ये ।
व्यापन्नासु च योनिषु शस्तं नष्टे च रेतसि ॥ ९ ॥
तालुशोषं तृषां दाहं पार्श्वशूलमसृग्दरम् ।
हन्ति शोषमपस्मारं विसर्पं सशिरोग्रहम् ॥ १० ॥
आयुर्वर्णकरं चैव बलातैलं प्रजाकरम् ।

वातव्याधौ बृहद्बलातैलम् ।

बृहद्बलायास्तु तुलां चतुर्द्रोणेऽम्भसः पचेत् ॥ ११ ॥
समुत्तार्य ततः सम्यग्दशभागस्थिते रसे ।
दधिमण्डेक्षुनिर्यासयुक्तैस्तैलाढकं समैः ॥ १२ ॥
पचेत्साजपयोर्धांशैः कल्कैरेभिः पलोन्मितैः ।
शठीसरलदार्वेलामञ्जिष्ठागुरुचन्दनैः ॥ १३ ॥
पद्मकातिबलामुस्तासूर्यपर्णीहरेणुभिः ।
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ १४ ॥
पलाशरसकस्तूरीनलिकाजातिकोशकैः ।
स्पृक्काकुङ्कुमशैलेयमालतीकट्फलाम्बुभिः ॥ १५ ॥
त्वचाकुन्दुरुकर्पूरतुरुष्कश्रीनिवासकैः ।
लवङ्गनखकङ्कोलकुष्ठमांसीप्रियङ्गुभिः ॥ १६ ॥
स्थौणेयतगरध्यामवचादमनचोरकैः ।
सनागरकेशरैः सिद्धे दद्यात्पात्रावतारिते ॥ १७ ॥
तत्र कल्कं ततः पूतं विधिना च प्रयोजयेत् ।
कासं श्वासं ज्वरं छर्दिं शूलं हिक्कां क्षतक्षयम् ॥ १८ ॥
प्लीहं शोषमपस्मारमलक्ष्मीं च प्रणाशयेत् ।
बलातैलमिदं श्रेष्ठं वातव्याधिहरं परम् ॥ १९ ॥

वातव्याधौ तृतीयं बलातैलम् ।

बलाशतकषाये तु तैलस्यार्धाढकं पचेत् ।

कल्कैर्मधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैः ॥ २० ॥
सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागरुकेशरैः ।
गन्धैश्च जीवनीयैश्च क्षीराढकसमायुतम् ॥ २१ ॥
एतन्मृद्वग्निना पक्वं स्थापयेद्भाजने शुभे ।
सर्ववातविकारांस्तु सर्वधात्वन्तराश्रयान् ॥ २२ ॥
तैलमेतत्प्रशमयेच्छिन्नाभ्रमिव मारुतः ।
बलातैलं नरेन्द्रार्हमेतद्वातविकारनुत् ॥ २३ ॥

मूढगर्भे चतुर्थं बलातैलम् ।

बलामूलकषायस्य दशमूलीकृतस्य च ।
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥ २४ ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदैकतः ।
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥ २५ ॥
तथागरुं सर्जरसं सबलं देवदारु च ।
मजिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम् ॥ २६ ॥
शतावरीं चाश्वगन्धां शतपुष्पां पुनर्नवाम् ।
तत्साधु सिद्धं सौवर्णे राजते मृन्मयेऽपि वा ॥ २७ ॥
प्रक्षिप्य कलशे सम्यक् स्वनुगुप्तं निधापयेत् ।
बलातैलमिदं ख्यातं सर्ववातविकारनुत् ॥ २८ ॥
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥२९॥
धातुक्षीणे मर्महते मथितेऽभिहते तथा ।
भग्ने श्रमाभिपन्ने च सर्वथैव प्रयुज्यते ॥ ३० ॥
एतदाक्षेपकादींश्च वातव्याधीनपोहति ।
प्रत्यग्रधातुः पुरुषो भवेत्सुस्थिरयौवनः ॥ ३१ ॥
राज्ञामेतत्प्रकर्तव्यं राजमात्राश्च ये नराः ।
सुखिनः सुकुमाराश्च धनिनश्चापि ये नराः ॥ ३२ ॥

सप्र

वातव्याधौ प्रसारणीतैलम् ।

समूलपत्रामुत्पाट्य जातसारां प्रसारणीम् ।
कुट्टयित्वा पलशतं कटाहे समधिश्रयेत् ॥ ३३ ॥
वारिद्रोणसमायुक्तं चतुर्भागावशेषितम् ।
कषायसममात्रं तु तैलमत्र प्रदापयेत् ॥ ३४ ॥
दध्नस्तथाऽऽढकं दत्वा द्विगुणैश्चाम्लकाञ्जिकैः ।
यवक्षारपले द्वे च सैन्धवस्य पलद्वयम् ॥ ३५ ॥
द्वे पले पिप्पलीमूलाच्चित्रकस्य पलद्वयम् ।
एतत्सर्वं समालोड्य शनैर्मृद्वग्निना पचेत् ॥ ३६ ॥
एतदभ्यञ्जनं श्रेष्ठं नस्यकर्मणि शस्यते ।
पाने बस्तौ च दातव्यं न क्वचित्प्रतिहन्यते ॥ ३७ ॥
अशीतिर्वातरोगाणां तैलमेतद्व्यपोहति ।
गृध्रसीं सास्थिभङ्गां च मन्दाग्नित्वं च नाशयेत् ॥३८ ॥
अपस्मारमथोन्मादं विद्रधिं मन्दगामिताम् ।
त्वग्गताश्चापि ये वाताः शिरासन्धिगताश्च ये ॥ ३९॥
जानुगुल्फगताश्चैव पादपृष्ठगतास्तथा ।
अश्वं वा वातसंभग्नं नरं वा जर्जरीकृतम् ॥ ४० ॥
सर्वान् प्रशमयत्येतत्तैलमात्रेयपूजितम् ।
इन्द्रियैश्वर्यजननं वन्ध्यानां च प्रजाकरम् ॥ ४१ ॥
एतेनान्धकवृष्णीनां बहुच्छत्रं कुलं कृतम् ।
प्रसारणीतैलमिदं बलमांसविवर्धनम् ॥ ४२ ॥
धन्यं प्रजाकरं श्रेष्ठं वृद्धकालेऽपि सेवितम् ।
पङ्गुलः पीठसर्पी वा पीत्वैतत्संप्रधावति ॥ ४३ ॥

द्वितीयं प्रसारणीतैलम् ।

प्रसारण्याः पलशतं बलामूलार्धभागिकम् ।
शतावर्यश्वगन्धा च शतपुष्पा पुनर्नवा ॥ ४४ ॥
गडूची दशमूलं च चित्रको मदनं शठी ।

पलांशकान् समापोथ्य जलद्रोणे विपाचयेत् ॥ ४५ ॥
चतुर्भागावशेषं तु कषायमवतारयेत् ।
रास्नां शताह्वां मधुकं पिप्पलीं नागरं वचां ॥ ४६ ॥
कुष्ठं हरेणुकां मांसीं प्रियङ्ग्विन्द्रयवान् बिडम् ।
सैन्धवं शृङ्गवेरं च यवक्षारं सचित्रकम् ॥ ४७ ॥
मधूलिकां व्याघ्रनखं पालिकान् श्लक्ष्णपेषितान् ।
पचेत्तैलाढकं पूतमारनालपयोयुतम् ॥ ४८ ॥
एतदभ्यञ्जनं श्रेष्ठं नस्यकर्मानुवासने ।
गृध्रसीमस्थिभङ्गं च ये च मन्दाग्नयो नराः ॥ ४९ ॥
अपस्मारं तथोन्मादं विद्रधिं मन्दगामिताम् ।
त्वग्गताश्चापि ये वाताः शिरासन्धिगताश्च ये ॥ ५० ॥
अश्वं वा वातसंभग्नं नरं वा जर्जरीकृतम् ।
सर्वान् प्रशमयत्येतत्तैलमात्रेयपूजितम् ॥ ५१ ॥
स्थिरीकरणमेतद्धि वलीपलितनाशनम् ।
इन्द्रियाणां बलकरं वर्णौदार्यकरं तथा ॥ ५२ ॥
बल्यं प्रजाकरं श्रेष्ठं वृद्धकालेऽपि सेवितम् ।
पङ्गुर्वाऽप्यथवा खञ्जः पीत्वा तैलं प्रधावति ॥ ५३ ॥

वातरोगे तृतीयं प्रसारणीतैलम् ।

समूलपत्रामुत्पाट्य जातसारां प्रसारणीम् ।
कुट्टयित्वा पलशतं कटाहे समधिश्रयेत् ॥ ५४ ॥
दशमूली बला रास्ना तथा सहचरामृते ।
शतावरी श्वदंष्ट्रा च एरण्डः कपिकच्छुका ॥ ५५ ॥
पृथग्दशपलान् भागांस्तथैव समधिश्रयेत् ।
वारिद्रोणे समायुक्तं चतुर्भागावशेषितम् ॥ ५६ ॥
कषायसमभागं तु तैलमत्र प्रदापयेत् ।
प्रशस्ते च दिने कार्यं नक्षत्रे चापि शोभने ॥ ५७ ॥

देवदारु वचा मुस्तं शताह्वा मधुयष्टिका ।
पिप्पली मधुकं रास्ना ह्यष्टवर्गेण संयुता ॥ ५८ ॥
चित्रकं पद्मकोशीरे कुष्ठं व्याघ्रनखं शठी ।
शुण्ठीसैन्धवमञ्जिष्ठाः कल्कपेष्याणि कारयेत् ॥ ५९ ॥
दधिमस्त्वम्लशुक्तानां तथा मांसरसस्य च ।
आढकाढकमादाय शनैर्मृद्वग्निना पचेत् ॥ ६० ॥
एतदभ्यञ्जनं पानं नस्यकर्मानुवासनम् ।
पृष्ठपार्श्वग्रहे शूले सक्थिवङ्क्षणयोस्तथा ॥ ६१ ॥
एकाङ्गके पक्षवधे हनुमन्याशिरोग्रहे ।
बाधिर्ये कर्णशूले च कर्णनादे च दापयेत् ॥ ६२ ॥
अभ्यङ्गात्त्वग्गतं हन्ति पानान्मांसगतं तथा ।
पक्वाशयगते बस्तिर्निरूहः सार्वकार्मिकः ॥ ६३ ॥
अशीतिर्वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिः श्लेष्मजांश्चैव सर्वानेवापकर्षति ॥ ६४ ॥
गृध्रसीं वातभग्नं च ऋतुदोषं तथैव च ।
ये नरा नष्टशुक्राश्च ऋतुहीनाश्च याः स्त्रियः ॥ ६५ ॥
वन्ध्या च लभते गर्भमृतुस्नाता न संशयः ।
(यस्मात्प्रसारयत्येषा मेधाग्निजनता शुभा ॥ ६६ ॥
आयुर्वृद्धिकरा चैव तथा जनकपूजिता । ?)

वातव्याधौ चतुर्थं प्रसारणीतैलम् ।

प्रसारणीशतं क्षुण्णं पचेत्तोयार्मणे शुभे ॥ ६७ ॥
पादशेषे पचेत्तैलं दधिमस्त्वम्लकाञ्जिकम् ।
द्विगुणं श्लक्ष्णपिष्टानि द्रव्याणीमानि योजयेत् ॥ ६८ ॥
द्विपलान्यग्निमधुककणामूलं पटुं वचाम् ।
मूलं तथा प्रसारण्याः क्षारं च यवशूकजम् ॥ ६९ ॥
त्रिशद्भल्लातकास्थीनि नागरात्पलपञ्चकम् ।

सिद्धं मृद्वग्निना तैलं वातश्लेष्मामयाञ्जयेत् ॥ ७० ॥
अशीतिर्नरनारीणां वातरोगान्निषूदति ।
कुब्जवामनपङ्गुत्वं खञ्जत्वं गृध्रसीं खुडम् ॥ ७१ ॥
हन्यात्पृष्ठकटिग्रीवास्तम्भं चाशु व्यपोहति ।
पीठसर्पी विभग्नश्च पीत्वा तैलं सुखी भवेत् ॥ ७२ ॥
प्रसारणीतैलमिदं बलवर्णाग्निवर्धनम् ।

वातरक्ते शतावरीतैलम् ।

शतावरीरसप्रस्थं क्षीरप्रस्थं तथैव च ॥ ७३ ॥
शतपुष्पा देवदारु मांसी शैलेयकं बला ।
चन्दनं तगरं कुष्ठमेला सांशुमती तथा ॥ ७४ ॥
एतैः कर्षसमैर्भागैस्तैलप्रस्थं विपाचयेत् ।
कुष्ठवामनपङ्गूनां बधिरव्यङ्गकुष्ठिनाम् ॥ ७५ ॥
वायुना भग्नदेहानां येऽवसीदन्ति मैथुने ।
जराजर्जरदेहानां वध्मार्तिमुखशोषिणाम् ॥ ७६ ॥
त्वग्गताश्चापि ये वाताः सिरास्नायुगताश्च ये ।
सर्वांस्तान्नाशयत्याशु तैलं नास्त्यत्र संशयः ॥ ७७ ॥
नारायणमिदं नाम्ना विष्णुना समुदाहृतम् ।
दशाङ्गमिति विख्यातं न क्वचित्प्रतिहन्यते ॥ ७८ ॥

वातव्याधौ द्वितीयं शतावरीतैलम् ।

शतावर्यास्तु मूलानां रसप्रस्थं समाहरेत् ।
क्षीरद्विगुणसंयुक्तं तैलप्रस्थं विपाचयेत् ॥ ७९ ॥
शतपुष्पा देवदारु मांसी शैलेयकं वचा ।
मञ्जिष्ठा चन्दनं कुष्ठमेला चांशुमती बला ॥ ८० ॥
तुरङ्गगन्धा काकोली मेदा रास्ना पुनर्नवा ।
एतैरर्धपलैर्द्रव्यैः शनैर्मृद्वग्निना पचेत् ॥ ८१ ॥
अस्य तैलस्य पक्वस्य शृणु वीर्यमतः परम् ।
कुब्जानां वामनानां च पङ्गूनां पीठसर्पिणाम् ॥ ८२ ॥

आक्षेपके च भग्नानां तथा भग्नास्थिसन्धिषु।
एकाङ्गं तुद्यते यस्य गतिर्यस्य विहन्यते ॥ ८३ ॥
रक्तपित्तहरं शस्तं वातघ्नं परमं स्मृतम्।

वातव्याधौ रास्नातैलम्।

रास्नामूलस्य कुर्वीत द्वेशते च बलाशतम् ॥ ८४ ॥
शतावरीगुडूचीभ्यां वरुणाच्च शतं शतम्।
निर्गुण्डीशिग्रुकैरण्डशिरीषारग्वधादपि ॥ ८५ ॥
श्वदंष्ट्राभूतिकाभ्यां च पृथक् पञ्चपलं क्षिपेत्।
तोयद्रोणेषु शतसु साधयेत्सूक्ष्मकुट्टितम् ॥ ८६ ॥
द्रोणावशेषे तैलस्य शुद्धस्यार्धार्मणं पचेत्।
द्रोणा दश च दुग्धस्य घृतस्यार्धाढकं तथा ॥ ८७ ॥
तदैकध्यं विपक्तव्यं गर्भं चात्र समावपेत्।
मधुकं मालतीपुष्पं मञ्जिष्ठां मदयन्तिकाम् ॥ ८८ ॥
काश्मर्याण्यजमोदां च लवलीं तालमस्तकम्।
आत्मगुप्ताफलं मूर्वां वार्ताकानि मधूलिकाम् ॥ ८९ ॥
सहदेवामयैरण्डं रोहिषं नवमालिकाम्।
कायस्थां च वयस्थां च मधुपर्णीं च चित्रकम् ॥ ९० ॥
महापुरुषदन्तां च बलां सकदलीफलाम्।
देवदार्वगरुश्रेष्ठं चन्दनं परिपेलवम् ॥ ९१ ॥
नीलोत्पलमुशीराणि मृद्वीकां साम्लवेतसाम्।
एभिः पलशतैः पिष्टैः सम्यक् तैलं विपाचयेत् ॥ ९२ ॥
भोजनाभ्यञ्जने पाने बस्तौ नस्ये च शस्यते।
वातव्याधिषु सर्वेषु क्षतक्षीणे शिरोग्रहे ॥ ९३ ॥
अपस्मारे रक्तगुल्मे पुंसां नष्टे च रेतसि।
रास्नातैलमिदं श्रेष्ठं बलमांसविवर्धनम् ॥ ९४ ॥

वातव्याधौ शताह्वातैलम्।

जलद्रोणे शताह्वायाः पादशेषे तुलां पचेत्।

क्वाथं तैलाढकोन्मिश्रं पचेत्क्षीरे चतुर्गुणे ॥ ९५ ॥
हरेणुकुष्ठसूक्ष्मैलातगरागरुसैन्धवैः ।
पक्वं कल्कैः पलसमैः प्रयोज्यं वातरोगनुत् ॥ ९६ ॥
योनिशुक्ररजोदोषनाशनं स्त्रीषु पुत्रदम् ।
शताह्वातैलमित्येतद्बृंहणं बलवर्धनम् ॥ ९७ ॥

वातव्याधौ मूलकतैलम् ।

बालमूलकनिर्यूहतैलदध्यम्लकाञ्जिकम् ।
क्षीरं चैवाढकीयानि पचेत्कल्कैः पलोन्मितैः ॥ ९८ ॥
रास्ना भल्लातकं चैव सैन्धवं गजपिप्पली ।
बला सातिविषा शुण्ठी पिप्पल्यश्चित्रकं वचा ॥ ९९ ॥
श्वदंष्ट्रा चेति तत्पक्वं श्लेष्मवातामयापहम् ।
वर्ध्मगृध्रसीपङ्गुत्वं कुण्डलं सापतन्त्रकम् ॥ १०० ॥
कट्यूरुस्तम्भशोषं च पर्वस्तम्भं सकम्पनम् ।
हन्याद्गुल्मं च वातोत्थं बलवर्णाग्निवर्धनम् ॥ १०१ ॥
वन्ध्यानां पुत्रदं चैव तैलं मूलकसाह्वयम् ।

वातव्याधौ सहचरतैलम् ।

समूलपत्रशाखस्य शतं सहचरस्य च ॥ १०२ ॥
चतुर्गुणे जलद्रोणे साधयेत्सूक्ष्मचूर्णितम् ।
द्रोणावशेषे पूते च पचेत्तैलाढकं शनैः ॥ १०३ ॥
सहचरस्य मूलानां पेष्यं दशपलं भवेत् ।
परिस्राव्य सुखोष्णे तु शर्करायाः प्रदापयेत् ॥ १०४ ॥
पलानि दश चाष्टौ च निर्मथ्य च निधापयेत् ।
बस्तौ पाने तथाऽभ्यङ्गे नस्ये चैव प्रशस्यते ॥ १०५ ॥
एकाङ्गिकं पक्षवधं हनुग्रहशिरोग्रहम् ।
अर्दितं वेपथून्मादं सर्वगात्रग्रहं ज्वरम् ॥ १०६ ॥
गृध्रसीं वातगुल्मं च भूतोपहतचेतसम् ।
अपस्मारं हनुस्तम्भमूरुस्तम्भं च नाशयेत् ॥ १०७ ॥

गण्डकुण्डलवर्ध्मानि हनुजानुविकुञ्चनम् ।
संधानं सर्वगात्राणां स्तम्भनं शोधनं तथा ॥ १०८ ॥
तैलमेतत्प्रशमयेच्छिन्नाभ्राणीव मारुतः ।

वातव्याधौ सहचरतैलम् ।

समूलपत्रशाखस्य शतं सहचरस्य च ॥ १०९ ॥
क्षोदयित्वा जलद्रोणे क्काथं पादावशेषितम् ।
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ ११० ॥
चन्दनं तगरं कुष्ठमेलां चांशुमतीं तथा ।
एतैः कर्षसमैर्भागैस्तैलप्रस्थं विपाचयेत् ॥ १११ ॥
पयस्तद्विगुणं दत्त्वा पलान्यष्टौ च शर्करा ।
अथ तैलस्य पक्कस्य शृणु वीर्यमतः परम् ॥ ११२ ॥
ये च कोष्ठगता वाता ये च वाताः शिरोगताः ।
अस्थिमज्जगताश्चैव कर्णमध्यगताश्च ये ॥ ११३ ॥
मूकानां मिन्मिणानां च पीठकट्यूरुसर्पिणाम् ।
स्वभावेन च ये भग्ना अस्थिभग्नाश्च ये नराः ॥ ११४ ॥
तेषां च संप्रयोक्तव्यं हितमेतदनूपमम् ।

वातव्याधौ श्योनाकतैलम् ।

श्योनाकमूलस्य शतं दशमूलीशतं तथा ॥ ११५ ॥
रोहिषं शिग्रुकं रास्नां पृथक् पञ्चशतं क्षिपेत् ।
छागलादथगव्याच्च माहिषात्कौक्कुटादपि ॥ ११६ ॥
पञ्चाशत्पलिकान् भागान् मांसादेषां प्रदापयेत् ।
चतुर्षु तोयद्रोणेषु साधयेच्छ्लक्ष्णकुट्टितम् ॥ ११७ ॥
द्रोणावशेषे पूते च पचेत्तैलाढकं शनैः ।
महासहां क्षुद्रसहां जीवन्तीं जीवकं वचाम् ॥ ११८ ॥
कुष्ठं च शतपुष्पां च सूक्ष्मैलां चैलवालुकम् ।
जीवकर्षभकौ द्राक्षां शृङ्गीं कर्कटकस्य च ॥ ११९ ॥
मोचां च निचुलं मुस्तां सारिवे द्वे महौषधम् ।

बलामतिबलां वीरां पारावतपदीं स्थिराम् ॥ १२० ॥
पिप्पलीं शर्करां दन्तीं त्वक्पत्रं च शतावरीम् ।
द्रवन्तीं माधवीं शिग्रुं सुवहां कदलीं तथा ॥ १२१ ॥
अशोकरोहिणीं पाठां कदलीकुसुमानि च ।
सैन्धवं सुरसां कालां सर्पाक्षीं गन्धनाकुलीम् ॥ १२२॥
पलङ्कषां चोरकं च बिम्बीं हंसपदीमपि ।
गर्भेणानेन तत्तैलं पचेत्क्षीरे चतुर्गुणे ॥ १२३ ॥
पाने चाभ्यञ्जने चैव नस्ये बस्तौ च शस्यते ।
वातव्याधिषु सर्वेषु क्षतक्षीणे ज्वरे श्रमे ॥ १२४ ॥
हृद्ग्रहे वातगुल्मे च पाङ्गुल्ये वातशोणिते ।
मारुते वाऽथ संसृष्टे सोन्मादेषु गदेषु च ॥ १२५ ॥
कुण्डले मूत्रकृच्छ्रे च वर्ध्ममूत्रभगन्दरे ।
गात्रे गात्रैकदेशेषु वायुना स्तम्भितेषु च ॥ १२६ ॥
हनुग्रहेष्वर्दितेषु वेपने गात्रसंग्रहे ।
श्योनाकतैलमित्येतत्ख्यातं वातनिबर्हणम् ॥ १२७ ॥
पृथग्वातात्मके रोगे संसृष्टे च तथाऽमृतम् ।

सर्वाङ्गवातव्याधौ श्वदंष्ट्राद्यं तैलम् ।

समूलपत्रामादाय श्वदंष्ट्रां मतिमान् भिषक् ॥ १२८ ॥
शृतं पलशतं क्षुण्णं तनु निष्पीडयेद्बुधः ।
रसे चतुर्गुणे तस्मिन् पचेत्तैलाढकं शनैः ॥ १२९ ॥
द्विगुणं च दधिक्षीरमारनालं तथैव च ।
औषधानि च पेष्याणि देयान्यत्र प्रमाणतः ॥ १३० ॥
देवदारु शताह्वा च हिङ्गु त्रिकटुकं वचा ।
मुस्ता सतगरं कुष्ठं श्लक्ष्णपिष्टानि भागशः ॥ १३१ ॥
यदा सिद्धं विजानीयात्तदैनमवतारयेत् ।
पानानुलेपनेऽभ्यङ्गे बाह्ये चाभ्यन्तरेऽनिले ॥ १३२ ॥
सर्वगात्रगते वाते श्वदंष्ट्रातैलमुत्तमम् ।

खुड्डाकपद्मकं तैलम्[1] ।

पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम् ॥ १३३ ॥
सुपिष्टैः सर्जमञ्जिष्ठावीराकाकोलिचन्दनैः ।
खुड्डाकपद्मकं तैलं वातासृग्दरदाहजित् ॥ १३४ ॥

वातरक्ते महापद्मकं तैलम् ।

पद्मवेतसयष्ट्याह्वफलिनीपद्मकोत्पलैः ।
पृथक् पञ्चपलैर्दर्भबलाचन्दनकिंशुकैः ॥ १३५ ॥
जले शृतैः पचेत्तैलं प्रस्थं सौवीरसंयुतम् ।
लोध्रकालीयकोशीरजीवकर्षभकेशरैः ॥ १३६ ॥
मद्यन्तिलतापत्रपद्मकेशरपत्रकैः ।
प्रपौण्डरीककाकोलीमांसीदारुप्रियङ्गुभिः ॥ १३७ ॥
कुङ्कुमस्य पलार्धेन मञ्जिष्ठाद्विपलेन च ।
महापद्ममिदं तैलं वातासृग्रोगनाशनम् ॥ १३८ ॥

ज्वरे तृतीयं महापद्मकं तैलम् ।

दर्भवेतसमूलानि चन्दनं मधुकं बला ।
फेनिलापद्मकोशीरमञ्जिष्ठाकमलोत्पलैः ॥ १३९ ॥
कैंशुकं च विभागाः स्युः पृथक् पञ्चपलोन्मिताः ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥ १४० ॥
जीवकर्षभकौ मेदां रोध्रं भल्लातकं तथा ।
कालीयकं प्रियङ्गुं च दद्यात्केशरमेव च ॥ १४१ ॥
प्रपौण्डरीकं मधुकं पद्मकं पद्मकेशरम् ।
सुरभिं कुङ्कुमं चैव मञ्जिष्ठां मद्यन्तिकाम् ॥ १४२ ॥
मांसीं पत्रं च तुल्यांशं द्विगुणं कुङ्कुमं भवेत् ।
चतुर्गुणा तु मञ्जिष्ठा सौवीरं तैलसंमितम् ॥ १४३ ॥
तैलप्रस्थं पचेदेभिः कषायेणाथ पेषितैः ।
एतदभ्यञ्जनं तैलं विषमज्वरनाशनम् ॥ १४४ ॥

---

१ खुड्डाकशब्दोऽल्पार्थः । यथा चरके—खुड्डिका गर्भावक्रान्तिः, अल्पेत्यर्थः ।

महापद्ममिदं ख्यातमेतत्तैलं महागुणम् ।
वर्णप्रसादजननं सौकुमार्यविवर्धनम् ॥ १४५ ॥
पानाभ्यञ्जनबस्तौ च नस्यकर्मणि च स्मृतम् ।
वातपित्तभवं क्षिप्रं ज्वरमेतन्नियच्छति ॥ १४६ ॥

वातव्याधौ बृहन्माषतैलम् ।

प्रस्थे द्वे खण्डमाषाणां क्वाथयेत्सलिलार्मणे ।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥ १४७ ॥
मस्तुनस्त्वाढकं दत्त्वा तत्समं चाम्लकाञ्जिकम् ।
औषधानि च पेष्याणि तत्रेमानि प्रदापयेत् ॥ १४८ ॥
सैन्धवं मदनं रास्ना शताह्वा त्र्यूषणं वचा ।
तगरं चोरुबुकं च मञ्जिष्ठा पद्मकेशरम् ॥ १४९ ॥
बला गोक्षुरकं पाठा सरलं देवदारु च ।
साजगन्धाऽश्वगन्धा च पुष्करं सपुनर्नवम् ॥ १५० ॥
एतानि चाक्षमात्राणि कल्कीकृत्य प्रयोजयेत् ।
नस्ये पाने तथाऽभ्यङ्गे वस्तिकर्मणि योजयेत् ॥ १५१ ॥
अर्दितं कर्णशूलं च मन्यास्तम्भं हनुग्रहम् ।
बाधिर्यं पक्षघातं च गृध्रसीं खञ्जपङ्गुलम् ॥ ॥ १५२ ॥
सर्वानेतान् जयेच्छीघ्रं वृक्षमिन्द्राशनिर्यथा ।
माषतैलमिदं नाम्ना सर्ववातविकारनुत् ॥ १५३ ॥

बाहुरोगे लघुमाषतैलम् ।

कपिकच्छुवाट्यालकशतावरीसितपुनर्नवामूलैः ।
सैन्धवजिङ्गिणिकातरुनिर्यासाभ्यां च कटुतैलम् ॥१५४॥
माषक्वाथेन पचेद्द्विगुणेन पूर्वकल्कसंयुक्तम् ।
सकृदुपयुक्तमिदं नस्येन निहन्ति बाहुरुजम् ॥ १५५॥

वातव्याधौ तृतीयं महामाषतैलम् ।

माषातसीयवकुरण्टककण्टकारी-
गोकण्टटिण्डुकजटाकपिकच्छुतोयैः ।

कार्पासिकास्थिशणबीजकुलत्थकोल-
क्काथेन बस्तपिशितस्य रसेन तैलम् ॥ १५६ ॥
शुण्ठ्या समागधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सपर्ण्या ।
रास्नाबलामृतलताकटुकैर्विपक्वं
माषाख्यमेतदवबाहुकहारि तैलम् ॥ १५७ ॥
अर्धाङ्गशोषमपतानकमाढ्यवात-
माक्षेपकं सभुजकम्पशिरःप्रकम्पम् ।
नस्येन बस्तिविधिना परिषेचनेन
हन्यात्कटीजघनजानुरुजः समीरान् ॥ १५८ ॥

वातव्याधौ दशाङ्गतैलम् ।

शैरेयकोऽमृतलता वाजिगन्धा शतावरी ।
प्रसारणी नागबला श्वदंष्ट्रा सपुनर्नवा ॥ १५९ ॥
बला चेति समान् भागान् रास्नारससमन्वितान् ।
विज्ञाय दोषप्रकृतिं कषायमुपकल्पयेत् ॥ १६० ॥
तेन पादावशेषेण तिलतैलाढकं पचेत् ।
दधिमस्त्विक्षुनिर्यासशुक्तलाक्षोदकैः समैः ॥ १६१ ॥
चतुर्गुणेन पयसा कल्कैरेभिर्पलोन्मितैः ।
मांसीशताह्वामधुकमञ्जिष्ठारक्तचन्दनैः ॥ १६२ ॥
शतावरीदेवदारुकौन्तीत्वक्पत्रवारिजैः ।
कुष्ठागरुवचायुक्तैस्तैलं सिद्धं प्रदापयेत् ॥ १६३ ॥
बस्तौ पाने तथाऽभ्यङ्गे नस्ये च परिषेचने ।
सर्वरोगान् जयत्येतत्संसृष्टान् मातरिश्वना ॥ १६४ ॥
विशेषतो ह्यपस्मारमुन्मादं वातशोणितम् ।
स्त्रीणामपत्यजननं पुंसां चातिबलप्रदम् ॥ १६५ ॥
नराणां गद्गदानां च मूकानां वाक्प्रवर्तनम् ।
मेधाजननमायुष्यं बलवर्णाग्निवर्धनम् ॥ १६६ ॥

सर्वग्रहघ्नं विषजित् सन्निपातहरं परम् ।
दशाङ्गमिति विख्यातमश्विभ्यां परिकीर्तितम् ॥ १६७ ॥

ऊरुस्तम्भे सैन्धवाद्यं तैलम् ।

द्वे पले सैन्धवात्पञ्च शुण्ठ्या ग्रन्थिकचित्रकात् ।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाऽढकम् ॥१६८॥
आरनालं पचेत्प्रस्थं तैलस्यैरण्डजस्य च ।
गृध्रस्यूरुग्रहार्शोर्तिसर्ववातविकारनुत् ॥ १६९ ॥

कुसुम्भाद्यं तैलम् ।

कुसुम्भकुङ्कुमोशीरमञ्जिष्ठारक्तचन्दनैः ।
सिक्थसर्जरसातङ्कगुडूचीसैन्धवाम्बुदैः ॥ १७० ॥
मूर्वाशतावरीलाक्षामधुकैश्च पलांशकैः ।
चतुर्गुणेन पयसा पचेत्तैलाढकं भिषक् ॥ १७१ ॥
अर्दितं कर्णशूलं च शिरःशूलं च दारुणम् ।
गृध्रसीं वातरक्तं च पक्षाघातं व्यपोहति ॥ १७२ ॥
तद्बस्तिषु च पानेषु नस्ये च कर्णपूरणे ।
अभ्यङ्गे च शिरोरोगे तैलं विद्याद्यथाऽमृतम् ॥१७३॥
पाणिपादांसदाहेषु गुदयोनिरुजासु च ।
सुप्तिवातेऽस्थिभङ्गे च देवदेवेन पूजितम् ॥ १७४ ॥

भगन्दरे मागध्याद्यं तैलम् ।

मागधी मधुकं रोध्रं कुष्ठमेला हरेणवः ।
समङ्गा धातकी चैव सारिवा रजनीद्वयम् ॥ १७५ ॥
प्रियङ्गवः सर्जरसः पद्मकं पद्मकेशरम् ।
मातुलुङ्गस्य पत्राणि मधूच्छिष्टं ससैन्धवम् ॥ १७६ ॥
एतत्संभृत्य संभारं तैलं धीरो विपाचयेत् ।
एतद्धि गण्डमालासु मण्डलेष्वथ मेहिषु ॥ १७७ ॥
रोपणार्थे हितं तैलं भगन्दरविनाशनम् ।

भगन्दरे चित्रकाद्यं तैलम्।

चित्रकार्कत्रिवृत्पाठामलयूहयमारकान् ॥ १७८ ॥
सुधां वचां लाङ्गलिकां सप्तपर्णं सुवर्चिकाम्।
ज्योतिष्मतीं च संभृत्य तैलं धीरो विपाचयेत् ॥१७९॥
एतदभ्यञ्जनं तैलं भृशं दद्याद्भगन्दरे।
शोधनं रोपणं चैव सवर्णकरणं तथा ॥ १८० ॥

गण्डमालायामजमोदाद्यं तैलम्।

अजमोदा च सिन्दूरं हरितालं निशाद्वयम्।
क्षारद्वयं फेनयुतं सार्द्रकं सरलोद्भवम् ॥ १८१ ॥
इन्द्रवारुण्यपामार्गकदलीकन्दकैः समैः।
एभिः सार्षपकं तैलमजामूत्राष्टयोजितम् ॥ १८२ ॥
मृद्वग्नौ पाचयेदेतत्स्नुह्यर्कक्षीरसंयुतम्।
अजमोदादिकं तैलं गण्डमालां व्यपोहति ॥ १८३ ॥
आमां विदग्धां तु पचेत्पक्वां चैव विशोधयेत्।
रोपणं मृदुभावं च तैलेनानेन कारयेत् ॥ १८४ ॥

वातव्याधावश्वगन्धाद्यं तैलम्।

मूलानि चाश्वगन्धायाः शतं स्यात्खण्डशः कृतम्।
द्विद्रोणेऽपां पचेत्क्वाथमष्टभागावशेषितम् ॥ १८५ ॥
तैलाढकं समावाप्य क्षीरं दद्याच्चतुर्गुणम्।
एतत्समालोड्य पचेत्कल्कांश्चेमान् समावपेत् ॥१८६॥
तगरं शतपुष्पां च मुस्तं व्याघ्रनखं त्वचम्।
मधुकं शृङ्गवेरं च पृश्निपर्णीं बलां स्थिराम् ॥ १८७ ॥
रास्नां पुष्करमूलं च भूतीकं सपुनर्नवम्।
मञ्जिष्ठां नलदं पत्रं द्रवन्तीं सुरसां वचाम् ॥ १८८ ॥
श्वदंष्ट्रां च मृणालं च वयस्थां बहुपुत्रिकाम्।
श्लक्ष्णपिष्टार्धपलिकान् दत्त्वा गर्भं विपाचयेत् ॥१८९॥
तत्सिद्धमविदग्धं च ततः समवतारयेत्।

बस्तौ पाने तथाऽभ्यङ्गे नस्यकर्मणि भोजने ॥ १९० ॥
यत्र यत्र विधातव्यं तन्मे निगदतः शृणु ।
खञ्जमूकजडत्वे च तिमिरे च तथाऽर्बुदे ॥ १९१ ॥
पक्षाघाते तथाऽऽयामे च्युतभग्नास्थिसन्धिषु ।
विधेयं पृष्ठभग्नेषु हनुमन्याग्रहे तथा ॥ १९२ ॥
स्तम्भकम्पेषु शोफेषु रुजासु विविधासु च ।
ज्वरे च विषमे गुल्मे तथा मारुतशोणिते ॥ १९३ ॥
प्लीह्नि प्लीहोदरे चैव विद्रधिगृध्रसीषु च ।
क्षीणेन्द्रिया नष्टशुक्रा ये चान्ये षण्ढका नराः ॥१९४॥
भूतोपहतचित्ताश्च शस्यते तेषु नित्यशः ।
व्यापन्नयोनौ वन्ध्यासु पाययेत तदा भिषक् ॥१९५॥
पुत्रदं परमं प्रोक्तं धन्वन्तरिवचो यथा ।

वातव्याधावश्वगन्धाद्यं तैलम् ।

अश्वगन्धाशतं क्षुण्णं क्वाथ्य द्रोणे जलस्य च ॥ १९६ ॥
निःस्राव्य विपचेत्तैलं क्षीरं दत्त्वा चतुर्गुणम् ।
कल्कैर्मृणालशालूकबिशकिञ्जल्कमालती- ॥ १९७ ॥
पुष्पैर्ह्रीवेरमधुकवक्रसारिवकेशरैः ।
मेदापुनर्नवाद्राक्षामञ्जिष्ठाबृहतीद्वयैः ॥ १९८ ॥
वचैलापत्रत्रिफलामुस्तचन्दनपद्मकैः ।
पित्तरक्ताश्रयान्वातान् रक्तपित्तमसृग्दरम् ॥ १९९ ॥
हन्यात्पुष्टिकरं चैव कृशानां मांसवर्धनम् ।
रेतोयोनिविकारघ्नं व्रणदोषापकर्षणम् ॥ २०० ॥
षण्ढानपि वृषान् कुर्यात्पानाभ्यङ्गानुवासनैः ।

कुङ्कुमाद्यं मुखकान्तिदं तैलम् ।

कुङ्कुमं चन्दनं पत्रमुशीरं कमलोत्पले ॥ २०१ ॥
गोरोचना हरिद्रे द्वे मञ्जिष्ठा मधुयष्टिका ।
सारिवारोध्रपत्राङ्गपत्रगैरिककेशरम् ॥ २०२ ॥

स्वर्णक्षीरी प्रियङ्गुश्च कालेयं रक्तचन्दनम्।
एभिरक्षसमैर्भागैस्तैलप्रस्थं विपाचयेत् ॥ २०३ ॥
अभ्यङ्गाद्राजपत्नीनां ये चान्ये धनिनो नराः।
तिलकान् पिडकान् व्यङ्गान् नीलिकां मुखदूषिकाम् २०४
कार्श्यं चापि शरीरस्य दुश्छायां च विवर्णताम्।
नाशयेच्चाशु जनयेद्रूपं चाथ मनोहरम् ॥ २०५ ॥
पद्मकेशरवर्णाभं मुखं भवति कान्तिमत्।

वातरक्ते यष्टीमधुकाद्यं तैलम्।

मधुयष्ट्याः पलशतं कषाये पादशेषिते ॥ २०६ ॥
तैलाढकं समक्षीरं पचेत्कल्कैः पलोन्मितैः।
शतपुष्पावरीकुष्ठपयस्यागुरुचन्दनैः ॥ २०७ ॥
स्थिराहंसपदीमांसीद्विमेदामधुपर्णिभिः।
काकोलीक्षीरकाकोलीतामलक्यर्धिपद्मकैः ॥ २०८ ॥
जीवन्तीजीवकवचात्वक्पत्रनखवालकैः।
प्रपौण्डरीकमञ्जिष्ठासारिवैन्द्रीवितुन्नकैः ॥ २०९ ॥
चतुष्प्रयोगात्[1] तद्धन्ति तैलं मारुतशोणितम्।
सोपद्रवं साङ्गशूलं सर्वगात्रानुगं तथा ॥ २१० ॥
वातासृक्पित्तदाहार्तिज्वरघ्नं बलवर्णकृत्।

कर्णरोगे लघुक्षारतैलम्।

शुष्कमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम् ॥ २११ ॥
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम्।
मातुलुङ्गरसश्चैव कदल्या रस एव च ॥ २१२ ॥
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम्।
बाधिर्यं कर्णनादश्च पूयास्रावश्च दारुणः ॥ २१३ ॥
क्रमयश्च विनश्यन्ति तैलस्यास्य प्रपूरणात्।

---

१ अभ्यङ्गपाननस्यबस्तिषु चतुर्षु प्रयोगादित्यर्थः।

कर्णरोगे बृहत्क्षारतैलम् ।

शुष्कमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम् ॥ २१४ ॥
शतपुष्पा वचा कुष्ठं दारु शिग्रू रसाञ्जनम् ।
मातुलुङ्गरसश्चैव कदल्या रस एव च ॥ २१५ ॥
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम् ।
बाधिर्यं कर्णनादश्च पूयास्रावश्च दारुणः ॥ २१६ ॥
पूरणादस्य तैलस्य कृमयः कर्णसंश्रिताः ।
क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात् ॥२१७॥
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ।

नेत्ररोगे भृङ्गराजतैलम् ।

भृङ्गरसस्य प्रस्थं तैलात्कुडवं पलं च मधुकस्य ॥ २१८ ॥
क्षीरप्रस्थविपक्वं गतमपि चक्षुर्निवर्तयति ।

केशवृद्धौ द्वितीयं भृङ्गराजाद्यं तैलम् ।

भृङ्गरसत्रिफलोत्पलसारि लोहपुरीषसमन्वितकारि ॥ २१९ ॥
तैलमिदं पच दारुणहारि लुञ्चितकेशघनस्थिरकारि ।

केशवृद्धौ तृतीयं भृङ्गराजतैलम् ।

मार्कवस्वरसभावितगुञ्जाबीजचूर्णपरिपाचिततैलम् ॥२२०॥
मिश्रितं तु त्रुटिजटासुरकाष्ठैः केशवर्धनं वनितायाः ।

बृहद्भृङ्गराजाद्यं तैलम् ।

आनूपदेशजं पुष्टं गृहीत्वा मार्कवं शुभम् ॥ २२१ ॥
प्रक्षाल्य जर्जरीकृत्य रसं तस्य प्रपीडयेत् ।
चतुर्गुणेन तेनैव तैलप्रस्थं विपाचयेत् ॥ २२२ ॥
क्षीरपिष्टैरिमैर्द्रव्यैः संयोज्य मतिमान् भिषक् ।
मञ्जिष्ठा पद्मकं रोध्रं चन्दनं गैरिकं बलाम् ॥ २२३ ॥
रजन्यौ केसरं दारु प्रियङ्गुमधुयष्टिके ।
प्रपौण्डरीकं सौम्यं च पलिकान्यत्र दापयेत् ॥ २२४ ॥

कुष्ठं तगरमाषांश्च सिद्धार्थांश्चागुरुं तथा।
मुस्तकं चाथ शैलेयं कर्चूरं परिकल्कितम्॥ २२५॥
सम्यक्पक्कं ततो ज्ञात्वा शुभे भाण्डे निधापयेत्।
केशशाते शिरोदुःखे मन्यास्तम्भे हनुग्रहे॥ २२६॥
अकालपलिते चैव दारुणे चैव दारुणे।
दन्तकर्णाक्षिरोगेषु नस्यमेतत्प्रदापयेत्॥ २२७॥
नस्यप्रयोगान्मासेन क्षीरान्नप्रतिभोजिनः।
सुकुञ्चिताग्रान् केशांश्च स्निग्धान्कुर्याद्बहूंस्तथा।
खालित्ये सेन्द्रलुप्ते च तैलमेतद्यथाऽमृतम्॥ २२८॥

केशरोगे असनाद्यं तैलम्।

असनसारकषायविपाचितं त्रिफलया मधुकेन च संयुतम्।
भवति नावनतैलमनुत्तमं पलितनेत्रविकाररुजापहम्॥ २२९॥

शिरोरोगे षड्बिन्दुतैलम्।

एरण्डमूलं तगरं रास्ना यष्टी च सैन्धवम्।
जीवन्ती शतपुष्पा च विडङ्गं नागरं तथा॥ २३०॥
मधूकसारमित्येभिः कल्कपिष्टैस्तिलोद्भवम्।
तैलं पचेद्भृङ्गरसे द्विगुणे च पयस्तथ॥ २३१॥
षड्बिन्दुनस्यदानेन हन्याच्छीर्षामयान् बहून्।
चलतां द्विजकेशानां पततां दार्ढ्यमानयेत्॥ २३२॥
दृग्बलं परमं तेषां बाह्वोः स्यादुत्तमं बलम्।
वलिपलितहृत्तैलमिदं षड्बिन्दुसंज्ञितम्॥ २३३॥

शिरोरोगे द्वितीयं षड्बिन्दुतैलम्।

एरण्डमूलं तगरं शताह्वा जीवन्ती रास्ना लवणोत्तमं च।
भृङ्गं विडङ्गं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम्॥२३४॥
आजं पयस्तैलविमिश्रितं च चतुर्गुणे भृङ्गरसे विपक्कम्।
षड्बिन्दवो नासिकया प्रयुक्ता निघ्नन्ति सर्वाञ्छिरसो विकारान्

च्युतांश्च केशान्पतितांश्च दन्तानाबद्धमूलांश्च दृढीकरोति ।
सुपर्णदृष्टिप्रतिमं च चक्षुर्बाह्वोर्बलं चाभ्यधिकं करोति॥२३६॥

दन्तरोगे बकुलाद्यं तैलम् ।

बकुलस्य फलं लोध्रं बला वल्ली कुरण्टकम् ।
चतुरङ्गुलबब्बूलवाजिकर्णारिमेदकम् ॥ २३७ ॥
एषां कल्ककषायाभ्यां तैलं पक्वं मुखे धृतम् ।
स्थैर्यं करोति दन्तानां चलतां नावनेन च ॥ २३८ ॥

दन्तरोगे नीलसहचराद्यं तैलम् ।

तुलां धृतां नीलसहाचरस्य संक्षुद्य द्रोणे श्रपयेज्जलस्य ।
दत्त्वा चतुर्भागरसेन तेन तैलं पचेदर्धपलप्रयुक्तैः ॥ २३९ ॥
कल्कैरनन्ताखदिरारिमेदजम्ब्वाम्रयष्टीमधुकोत्पलानाम् ।
तत्तैलमाश्वेव धृतं मुखेन स्थैर्यं द्विजानां चलतां विदध्यात्२४०

मुखरोगे इरिमेदाद्यं तैलम् ।

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डशः कृत्वा ।
तोयाढकैश्चतुर्भिर्निष्क्वाथ्य चतुर्थशेषेण ॥ २४१ ॥
क्वाथेन भिषङ्मतिमान् तैलस्यार्धाढकं शनैर्विपचेत् ।
कल्कैरक्षसमांशैर्मञ्जिष्ठारोध्रमधुकानाम् ॥ २४२ ॥
इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैला- ।
कर्पूरागुरुपद्मकलवङ्गकङ्कोलजातीफलानाम् ॥ २४३ ॥
पत्तङ्गगैरिकवराङ्गगजकुसुमधातकीनां च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥ २४४ ॥
परिशीर्णदन्तविद्रधिशौषिरशीताददन्तहर्षेषु ।
कृमिदन्तदरणचलितप्रहृष्टमांसावदीर्णेषु ॥ २४५ ॥
मुखदौर्गन्ध्ये च तथा प्रागुक्तेष्वामयेषु नृणाम् ।
धार्यं मुखेन मुखजेष्वरुंषु संरोपणार्थाय ॥ २४६ ॥

दन्तरोगे द्वितीयमिरिमेदाद्यं तैलम्।

न वृद्धान्नातिबालाच्च त्वक्तुलामिरिमेदकात्।
अपां द्रोणे समावाप्य पचेत्पादावशेषितम् ॥ २४७ ॥
ततस्तेन कषायेण क्षीरप्रस्थसमन्वितम्।
लाक्षारससमायुक्तं तैलप्रस्थं पचेन्नरः ॥ २४८ ॥
लोध्रकट्फलमञ्जिष्ठापद्मकेसरपद्मकैः।
चन्दनोत्पलयष्ट्याह्वैः पालिकैर्धातकीसमैः ॥ २४९ ॥
एतद्रुजापहं नाम तैलं गण्डूषधारणात्।
दारणं दन्तचालं च हनुमोक्षं कपालिकाम् ॥ २५० ॥
शीतादं पूतिवक्त्रं च शौषिरं विरसास्यताम्।
हन्यादाशु गदानेतान् कुर्याद्दन्तांस्थिरानपि ॥ २५१ ॥

दन्तरोगे खदिराद्यं तैलम्।

शतं खदिरसारस्य जलद्रोणेन साधितम्।
पादशेषे रसे लोध्रमञ्जिष्ठारक्तचन्दनैः ॥ २५२ ॥
कट्वङ्गोशीरलाक्षैलात्वक्पत्रामरदारुभिः।
समङ्गाकुङ्कुमनखपरिपेलववालुकैः ॥ २५३ ॥
वालुकागुरुमुस्तैलास्पृक्कातगरपद्मकैः।
कल्कीकृतैः पचेदेभिस्तैलप्रस्थं भिषग्वरः ॥ २५४ ॥
धार्यं स्यात्कृमिदन्तेषु दन्तेषु चलितेषु च।
शौषिरे दन्तनाडीषु विद्रध्यां मुखजेषु च ॥ २५५ ॥
हन्यादाशु तदभ्यङ्गात्कुष्ठं च कफपित्तजम्।
वातजानि तु कुष्ठानि व्यङ्गप्लीहातिसुप्तिताम् ॥ २५६ ॥
त्वग्दोषपिटकाकण्डूरजस्रं वातशोणितम्।
व्रणं मासं च नस्येन वलिपलितनाशनम् ॥ २५७ ॥

ज्वरे बृहल्लाक्षादितैलम्।

लाक्षा हरिद्रा मञ्जिष्ठा फलिनी मधुकं बला।
लामज्जकं चन्दनं च गैरिकं नीलमुत्पलम् ॥ २५८ ॥

एषां भागान् समान् कृत्वा पक्त्वा तोये चतुर्गुणे ।
तुर्यभागावशेषं तु गर्भं चैनं समावपेत् ॥ २५९ ॥
हरेणुका पद्मकं च हयगन्धा तथैव च ।
वेतसं चोरकं कुष्ठं देवदारु नखत्वचम् ॥ २६० ॥
शतपुष्पा पुण्डरीकं मांसी मधुकमेव च ।
एभिरक्षसमैः कल्कैः कषायेनाथ पेषितैः ॥ २६१ ॥
दधिशुक्तारनालानामाढकाढकमावपेत् ।
क्षीराढकसमायुक्तं तैलप्रस्थं विपाचयेत् ॥ २६२ ॥
तदभ्यङ्गे प्रशंसन्ति तैलं दाहनिवारणम् ।
वातपित्तोद्भवं क्षिप्रं ज्वरमेतन्नियच्छति ॥ २६३ ॥
सप्रलापं सतृष्णं च तालुशोषमथ भ्रमम् ।
ग्रहोपसृष्टं बालं च रक्तसंदूषिताश्च ये ॥ २६४ ॥
एतत्तैलं प्रशमयेल्लाक्षादिकमिति स्मृतम् ।

ज्वरे लघुलाक्षादितैलम् ।

लाक्षारसं समादाय तैलप्रस्थाच्चतुर्गुणम् । ॥ २६५ ॥
मस्तुनश्चाढकं दद्याद्द्रव्यैरेभिश्च कार्षिकैः ।
मधुकेन हरिद्राभ्यां मुस्तेन सह मूर्वया ॥ २६६ ॥
रास्नया कटुरोहिण्या चन्दनेनाश्वगन्धया ।
शताह्वया च कुष्ठेन हरेण्वा देवदारुणा ॥ २६७ ॥
मञ्जिष्ठापद्मकोशीरबलामांसीभिरेव च ।
तत्सिद्धमथ पूतं च स्थापयेद्भाजने शुभे ॥ २६८ ॥
जीर्णज्वरपरीतानां श्वासकासार्तिनां तथा ।
गर्भिणीनां च नारीणां बालानां शुष्यतामपि ॥२६९॥
क्षीणानां शोषिणां चाथ तैलं लाक्षादिकं हितम् ।
विषमज्वरमोक्षार्थं सर्वज्वरग्रहापहम् ॥ २७० ॥

सन्निपातज्वरे जात्यादितैलम् ।

नवपत्राङ्कुरा जाती द्वे हरिद्रे शतावरी ।
जीवकर्षभकौ रास्ना सरलं देवदारु च ॥ २७१ ॥
मुस्तातालीशमञ्जिष्ठापाठावरुणचित्रकाः ।
कुब्जं सर्पसुगन्धं च मधुकं द्वे च सारिवे ॥ २७२ ॥
अनन्ताऽऽमलकं मूर्वा मधुकं करवीरकम् ।
देवपुष्पं शिरीषस्य मूलं स्योनाकमेव च ॥ २७३ ॥
चव्यं लाक्षा पयस्या च कल्कीकृत्याक्षसंमितान् ।
पक्त्वा चाथ कषायेण तैलप्रस्थं विपाचयेत् ॥ २७४ ॥
एतदभ्यञ्जनाद्धन्यात्सन्निपातात्मकं ज्वरम् ।
तैलं जात्यादिकं नाम वातपित्तकफापहम् ॥ २७५ ॥

ज्वरे षट्चरणं तैलम् ।

लाक्षाविश्वानिशामूर्वामञ्जिष्ठास्वर्जिकामयैः ।
षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत् ॥ २७६ ॥

शोषे शिरीषाद्यं तैलम् ।

मूलं त्वचं च पत्रं च प्रवालं स्कन्धमेव च ।
शिरीषाद्द्वितुले दद्याद्गर्भस्त्वेष प्रकीर्तितः ॥ २७७ ॥
वरुणः पारिभद्रश्च ककुभश्चतुरङ्गुलः ।
बिल्वोऽग्निमन्थः श्योनाकः करघाटः सवञ्जुलः॥२७८॥
गन्धर्वहस्तः काकोली काश्मरी पाटली तथा ।
निदिग्धिकाऽथ वार्ताकी शालिपर्णी मयूरकः ॥२७९॥
तुरगी श्रेयसी चैव शतावर्युदकं तथा ।
सुपव्यतिबला चैव दन्ती सिंहमुखी तथा ॥ २८० ॥
पञ्चाशत्पलिकान् भागान्मूलं पुष्पं च रोहिषात् ।
निष्काथस्त्रिफलायाश्च प्रस्थस्त्रिगुणितो भवेत् ॥ २८१ ॥
कोलकानां कुलत्थानां यवानां तत्समं तथा ।
द्राक्षायाः शतपुष्पायाः कुर्याच्चाढकमाढकम् ॥ २८२ ॥

छागलस्य तु मांसस्य द्वे तुले तत्र दापयेत् ।
एतत्सर्वं समालोड्य तोयद्रोणेषु पञ्चसु ॥ २८३ ॥
द्विद्रोणशेषं पूतं च तैलद्रोणेन संसृजेत् ।
पाठा मगधजा रास्ना सुषवी गोक्षुरं बला ॥ २८४ ॥
प्रियङ्गुर्द्वे हरिद्रे च मांसी चैला कुटन्नटम् ।
देवदारु वचा लोध्रं कुष्ठं व्याघ्रनखं शठी ॥ २८५ ॥
मञ्जिष्ठा मधुकं मुस्तं रोध्रं द्वे चापि सारिवे ।
सश्रीप्रियं चन्दनं च रक्तकं तैलपर्णिकम् ॥ २८६ ॥
समृणालत्वचं पत्रं पतङ्गं नीलमुत्पलम् ।
एषां द्विपालिकान् भागान् रम्भागर्भं समावपेत्॥२८७॥
दध्नो दद्याच्च त्रीन्द्रोणान् ततः सिद्धं निधापयेत् ।
शैरीषमिति विख्यातमेतत्तैलं क्षयापहम् ॥ २८८ ॥
प्रशस्तममृताकारं पानाभ्यञ्जनबस्तिषु ।
अपस्मारं तथोन्मादं शोषान् सोपद्रवानपि ॥ २८९ ॥
अङ्गमर्दमथो दाहं पाण्डुत्वं स्वरवैकृतम् ।
अर्दितं गृध्रसीं गुल्मान् कम्पं पक्षवधं तथा ॥ २९० ॥
हनुग्रहं खुडावातमाढ्यवातापतानकौ ।
मूकत्वं गद्गदत्वं च बाधिर्यं कर्णवेदनाम् ॥ २९१ ॥
उरौ जानुनि कुक्षौ च विसर्पं वातशोणितम् ।
हन्याद्वर्णबलोपेतो जीवेच्च शरदां शतम् ॥ २९२ ॥
प्रयोगादस्य तैलस्य न च रोगाः क्रमन्ति तम् ।
विषपीताश्च दुष्टाश्च भूतोपहतचेतसः ॥ २९३ ॥
ये पिबन्ति शिरीषाद्यं नीरुजस्ते भवन्ति हि ।
[1]मूलकर्मविकाराणां भूतानां दंष्ट्रिणामपि ॥ २९४ ॥
अधृष्यं तद्गृहं यत्र तैलमेतद्विधीयते ।

---

१ मूलकर्म अभिचारः, तत्कृता विकारा मूलकर्मविकाराः, तेषाम् ।

शोषे सुकुमारतैलम् ।

मधुकस्य शतं दद्यात्काश्मर्याश्च तथाऽऽढकम् ॥२९५॥
परूषकाणां द्राक्षायाः खर्जूरौदनपाक्ययोः ।
मधूकपुष्पस्य तथा तथा मौञ्जातमाढकम् ॥ २९६ ॥
द्विद्रोणेऽपां विपक्तव्यं चतुर्भागावशेषितम् ।
तस्मिन् कषाये पूते च पुनरग्नावधिश्रयेत् ॥ २९७ ॥
आर्द्रामलककाश्मर्यविदारीक्षुरसाढकम् ।
तैलाढकं च संयोज्य पचेत्क्षीरे चतुर्गुणे ॥ २९८ ॥
तस्मिंस्तथा पच्यमाने कल्कांश्चेमान् समावपेत् ।
पिप्पलीं शृङ्गवेरं च कदलीं च शतावरीम् ॥ २९९ ॥
बलां तालं कदम्बं च सूक्ष्मैलां पद्मबीजकम् ।
शृङ्गाटकं कसेरुं च जीवनीयानि यानि च ॥ ३०० ॥
द्विपालिकान् पृथग्दत्त्वा विपचेन्मृदुनाऽग्निना ।
तत्सिद्धं स्रावयित्वाशु शीतं क्षौद्रेण संसृजेत् ॥३०१॥
नस्ये चाभ्यञ्जने पाने प्रशस्ते बस्तिकर्मणि ।
वातव्याधिषु सर्वेषु क्षतक्षीणे शिरोग्रहे ॥ ३०२ ॥
पार्श्वशूले प्रमेहे च गुल्मे चार्शोभगन्दरे ।
वातभग्नाङ्गहीनानां कासे श्वासे च हृद्ग्रहे ॥ ३०३ ॥
ज्वरातिसारे ह्यरुचौ कर्णनादे स्वरक्षये ।
सुकुमारमिदं तैलं बालवृद्धसुखावहम् ॥ ३०४ ॥
एतद्धि वृष्यं बल्यं च रक्तमांसविवर्धनम् ।
स्वरवर्णकरं चैव शोषिणाममृतोपमम् ॥ ३०५ ॥
प्रपाकस्यास्य तैलस्य सम्यक्सिद्धस्य यो भवेत् ।
उदश्विदि विमध्यार्थ(?) सोऽपि कृत्यकरो भवेत् ३०६
एकादश च षट् चैव शोषिणां य उपद्रवाः ।
सुकुमारं प्रशमयेन्मेघोऽग्निमिव वृष्टिमान् ॥ ३०७ ॥

BUDDHISM

ldhist philosoph
ıe, succeeded in
s seats of Learni
deeply affected
ant *sadhus* wer
ıd to foreign l
dia, and is still
ıt of the domi
original home
a sub



अर्शसि लघुकासीसाद्यं तैलम्।

काशीसलाङ्गलीदन्तीकरवीरामलैः पचेत्।
तैलमर्कपयोन्मिश्रमभ्यङ्गात्पायुकीलजित्॥ ३०८॥

अर्शसि पृथुकासीसाद्यं तैलम्।

कासीसं सैन्धवं कृष्णा शुण्ठी कुष्ठं च लाङ्गली।
शिला द्रेकाश्वमारश्च जन्तुहृद्दन्तिचित्रकौ॥ ३०९॥
हरितालं तथा स्वर्णक्षीरी चैतैः पचेत्समैः।
तैलं सुधार्कपयसा गवां मूत्रे चतुर्गुणे॥ ३१०॥
एतदभ्यङ्गतोऽर्शांसि क्षारवत्पातयेद्ध्रुवम्।
क्षारकर्मकरो ह्येष न च दूषयते वलिम्॥ ३११॥

अर्शसि चित्रकाद्यं तैलम्।

चित्रकं मदनं पीलुं शृङ्गवेरं शुकाननाम्।
स्रोतोजं सैन्धवं दन्तीं हरितालं मनःशिलाम्॥३१२॥
तालीसं करवीरस्य मूलं लाङ्गलिकां वचाम्।
भद्रकं क्षीरिकां चैव स्वर्णक्षीरीं च पेषयेत्॥ ३१३॥
स्नुह्यर्कक्षीरकुडवौ पाच्यमाने प्रदापयेत्।
मूत्रे चतुर्गुणे तैलं पक्वमर्शोहरं भवेत्।
क्षारकर्मकरं ह्येतदभ्यङ्गात्तैलमुत्तमम्॥ ३१४॥

कुष्ठे शिंशपासारतैलम्।

देवद्रुदार्वीप्रपुनाटवाकुची-
तुम्बीफलोन्मत्तहयारिदारुभिः।
तुङ्गाफलत्वग्घरिमन्थवह्निजैः
प्रस्थोन्मितैः श्यामलसारषड्गुणैः॥ ३१५॥
तैलाढकार्धेन परिप्लुतैस्तैस्तैलं विदध्याद्बलिबन्धयन्त्रे।
तत्तैलमभ्यङ्गविधौ प्रदिष्टं पथ्याशिनां कुष्ठविघातकृत्स्यात् ३१६

कुष्ठे वज्रकं तैलम्।

मूलं शताह्वात्त्वक् शिरीषाश्वमारा-
दर्कान्मालत्याश्चित्रकास्फोतनिम्बात्।

बीजं कारञ्जं सार्षपं प्रापुनाटं
श्रेष्ठं जन्तुघ्नं त्र्यूषणं द्वे हरिद्रे ॥ ३१७ ॥
तैलं पक्वं साधितं तैः समूत्रैस्त्वग्दोषाणां कुष्ठनाडीव्रणानाम् ।
अभ्यङ्गेन श्लेष्मवातोद्भवानां नाशायालं वज्रकं वज्रतुल्यम् ३१८

कुष्ठे महावज्रकं तैलम् ।

एरण्डतार्क्ष्यघननीपकदम्बभार्गी-
कम्पिल्लवेल्लफलिनीसुरवारिणीभिः ।
निर्गुण्ड्यरुष्करमुराह्वसुवर्णदुग्धा-
श्रीवेष्टगुग्गुलुशिलापटुतालकैश्च ॥ ३१९ ॥
तुल्यं स्नुगर्कदुग्धं सिद्धं तैलं महावज्रकाह्वम् ।
अतिशयति वज्रकगुणान् श्वित्रार्शोग्रन्थिमालाघ्नम् ॥३२०

कुष्ठे श्वेतकरवीराद्यं तैलम् ।

श्वेतकरवीरपल्लवमूलत्वक्पुष्पचित्रकविडङ्गानि ।
कुष्ठार्कमूलसर्षपशिग्रुत्वग्रोहिणीकटुकाः ॥ ३२१ ॥
एतैस्तैलं सिद्धं कल्कैः पादांशकैर्गवां मूत्रम् ।
दत्त्वा तैलचतुर्गुणमभ्यङ्गात्कुष्ठकण्डूघ्नम् ॥ ३२२ ॥

कुष्ठे सिन्दूराद्यं सूर्यपाकं तैलम् ।

सिन्दूरशङ्खचूर्णकहरितालमनःशिलायवक्षारैः ।
कासीसकच्छसंभवगन्धाह्वयसंयुतैस्तैलम् ॥ ३२३ ॥
दिनकरतप्तं पामाविचर्चिकादद्रुकुष्ठकिटभादीन् ।
नाशयति लेपमात्राद्भूयो भूयः कपालकुष्ठमपि ॥ ३२४ ॥

कुष्ठे कुष्ठकालानलं तैलम् ।

क्षारद्वयं कटुत्रीणि पञ्चैव लवणानि च ।
वचा कुष्ठं हरिद्रे द्वे विडङ्गं चित्रकं विषम् ॥ ३२५ ॥
हरितालं शिला गन्धं सिन्दूरं तुत्थखर्परम् ।
रामठं च रसोनं च मदनं च रसाञ्जनम् ॥ ३२६ ॥

एतत्सर्वं समांशं च स्नुह्यर्कपयसा प्लुतम् ।
षड्गुणं सार्षपं तैलं तैलान्मूत्रं चतुर्गुणम् ॥ ३२७ ॥
सर्वं मन्दानले पक्वं ग्राह्यं तैलावशेषकम् ।
हन्त्यष्टादश कुष्ठानि मांसमेदोगतानि च ॥ ३२८ ॥
दुष्टव्रणानि शातानि जीर्णनाडीव्रणानि च ।
हन्ति श्वित्रमसाध्यं च दद्रुपामाविचर्चिकाः ॥ ३२९ ॥
एतत्तैलं सदाऽभ्यङ्गात्कुष्ठव्याधिहरं नृणाम् ।

कुष्ठे कनकक्षीर्याद्यं तैलम् ।

कनकक्षीरी शैलं भार्गी दन्तीफलानि मूलं च ॥३३०॥
जातीप्रवालसर्षपलशुनविडङ्गं करञ्जत्वक् ।
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोताः ॥ ३३१
गुञ्जैरण्डो बृहतीमूलकसुरसार्जकफलानि ।
कुष्ठं तुम्बरु पाठा मूर्वा मुस्तं निशा च षड्ग्रन्था ॥३३२
एडगजबीजशिग्रुत्र्यूषणभल्लातकक्षवकाः ।
हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासङ्गः॥३३३
सौराष्ट्री कासीसं दार्वी त्वक् स्वर्जिका लवणम् ।
कल्कैरेतैस्तैलं करवीरकमूलपल्लवकषाये ॥ ३३४ ॥
सार्षपमथवा तैलं गोमूत्रे चतुर्गुणे साध्यम् ।
कटुकालाबौ स्थाप्यं तत्सिद्धं तेन मण्डलान्याशु ॥३३५
छिन्द्याद्भिषगभ्यङ्गात्कण्डूकोठांश्च विनिहन्यात् ।

पामायां आर्द्रकाद्यं तैलम् ।

आर्द्रकस्यार्कदुग्धस्य स्नुक्क्षीरस्य पृथक् पृथक् ॥३३६॥
द्वे द्वे पले तु द्विपलं सिन्दूरं च समाहरेत् ।
भूर्जकर्षविमिश्राणि कटुतैलस्य पाचयेत् ॥ ३३७ ॥
पलानि दश चाभ्यङ्गात्कच्छुरोगविनाशनम् ।

दद्रूरोगे दार्व्याद्यं सूर्यपाकतैलम् ।

दार्वीगण्डीरसंयुक्तैः कासमर्दकसंभवैः ॥ ३३८ ॥

मूलैर्महोटिकायास्तु स्वरसेन समन्वितैः।
स्नुहीक्षीरनिशामूर्वागृहधूमफणिज्जकैः॥ ३३९॥
रालाविडङ्गमगधागौरसर्षपनागरैः।
चक्रमर्दकनाडीकावाकुचीनक्तमालकैः॥ ३४०॥
मूलकस्य च बीजैस्तु सुरसारग्वधच्छदैः।
सक्षारलवणोपेतैर्गोमूत्रैः परिपेषितैः॥ ३४१॥
कटुतैलस्थितैः पक्वैः सम्यग्रविगभस्तिभिः।
कृतमाशु नराणां तु हन्यादेभिः प्रलेपनम्॥ ३४२॥
दद्रूं विचर्चिकां कण्डूं पामां दुर्भक्तकं(?) तथा।

कुष्ठे गुग्गुल्वाद्यं सूर्यपाकतैलम्।

गुग्गुलुमरिचविडङ्गैः सर्षपकासीसमुस्तसर्जरसैः॥३४३॥
श्रीवेष्टतालगन्धैर्मनःशिलाकुष्ठकम्पिल्लैः।
उभयहरिद्रासहितैः कटुतैलं विमिश्रितैरेभिः॥ ३४४॥
आदित्यरश्मिपक्वैः कुष्ठं विनिहन्ति संस्पर्शात्।

कुष्ठे विद्रावणं तैलम्।

मनःशिलाले सिन्दूरं सौराष्ट्री गन्धकस्तथा॥ ३४५॥
ससिक्थकं सर्जरसं कासीसं पुरकुन्दरू।
श्याह्वः शल्लकिकम्पिल्लं कङ्कुष्ठं चाप्यरुष्करम्॥३४६॥
गवां मूत्रेण संसिद्धं कटुतैलं प्रयोजयेत्।
पामाविचर्चिकादद्रूकण्डूकुष्ठक्रिमीन् व्रणान्॥ ३४७॥
अभ्यङ्गाच्छमयत्येतन्नाम्ना विद्रावणं मतम्।

कुष्ठे महासुगन्धं तैलम्।

चन्दनं कुङ्कुमोशीरं प्रियङ्गुत्रुटिरोचनाः॥ ३४८॥
तुरुष्कागुरुकस्तूर्यः कर्पूरं जातिपत्रिका।
जातीकक्कोलपूगानां लवङ्गस्य फलानि च॥ ३४९॥
नलिका नलदं कुष्ठं हरेणुस्तगरः प्लवम्।

नखं व्याघ्रनखं स्पृक्का बोलो दमनको मुरा ॥ ३५० ॥
स्थोणेयकं चोरकं च शैलेयं सैलवालुकम् ।
सरलः सप्तपर्णश्च च लाक्षा तामलकी तथा ॥ ३५१ ॥
लामज्जकं पद्मकं च धातक्याः कुसुमानि च ।
प्रपौण्डरीकं कर्चूरः समांशैः शाणमात्रकैः ॥ ३५२ ॥
महासुगन्धमित्येतत्प्रस्थं तैलस्य साधयेत् ।
प्रस्वेदमलदौर्गन्ध्यकण्डूकुष्ठहरं परम् ॥ ३५३ ॥
अनेनाभ्यक्तगात्रः स्याद्वृद्धः सप्ततिकोऽपि वा ।
युवा भवति शुक्राढ्यः स्त्रीणां चात्यन्तवल्लभः ॥३५४॥
सुभगो दर्शनीयश्च गच्छेच्च प्रमदाशतम् ।
वन्ध्यापि लभते गर्भं षण्ढोऽपि पुरुषायते ॥ ३५५ ॥
अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ।

कुष्ठे मरीचाद्यं तैलम् ।

मरीचं त्रिवृता मुस्तं हरितालं मनःशिला ॥ ३५६ ॥
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ।
विशाला करवीरश्च भानुक्षीरं शकृद्रसः ॥ ३५७ ॥
एतेषां कार्षिकान् भागान् विषस्यार्धपलं भवेत् ।
प्रस्थं च कटुतैलस्य गोमूत्रे द्विगुणे पचेत् ॥ ३५८ ॥
मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना भिषक् ।
तैलेनानेन नश्यन्ति रोगा देहे शरीरिणाम् ॥ ३५९ ॥
पामा विचर्चिका चैव दद्रुविस्फोटकानि च ।
अभ्यङ्गेन प्रणश्यन्ति श्यामलत्वं प्रजायते ॥ ३६० ॥
प्रच्छिन्नान्यपि श्वित्राणि तैलेनानेन म्रक्षयेत् ।
चिरोत्थमपि यच्छ्वित्रं सवर्णं म्रक्षणाद्भवेत् ॥ ३६१ ॥

कुष्ठे भ्रामरिकं तैलम् ।

गुञ्जामूलं फलं कुष्ठं विषं सिन्दूरसिक्थकम् ।
द्वे हरिद्रे सलाङ्गल्यौ गुग्गुल्वग्रे तथैव च ॥ ३६२ ॥

कृकलाससमायुक्तं कटुतैलं विपाचयेत् ।
क्षिपेत्स्वरूपद्रव्याणि सुदग्धान्यवतारयेत् ॥ ३६३ ॥
उद्धृत्य तैलमध्यात्तु सूक्ष्मचूर्णानि कारयेत् ।
चूर्णं तैले पुनः कृत्वा त्रिशूलीं दापयेत्ततः ॥ ३६४ ॥
जीवन्तीं जीवनीमूलं तथा च व्रणरोहिणीम् ।
एतच्चूर्णं समालोड्य त्वेकरात्रं तु धारयेत् ॥ ३६५ ॥
शिरोरोगं व्रणं कुष्ठं पामां चैव विचर्चिकाम् ।
ये व्रणा न प्ररोहन्ति गम्भीरा भैरवाश्च ये ॥ ३६६ ॥
तांस्तु नाशयते सर्वान् सप्ताहेन न संशयः ।
भिषजां नात्र सन्देहस्तैलं भ्रामरिकं खलु ॥ ३६७ ॥

व्रणे महाकषायं तैलम् ।

उदुम्बरो वटश्चैव प्लक्षः पिप्पल एव च ।
मधूक आम्रः सर्जश्च जम्बूद्वयमथार्जुनः ॥ ३६८ ॥
कम्पिल्लकः पियालश्च कदम्बस्तिन्दुकस्तथा ।
पलाशो रोध्रसंमिश्रं बदरं पद्मकेसरम् ॥ ३६९ ॥
शिरीषो बीजकश्चैव तथा रक्तं च चन्दनम् ।
अमीषां क्वाथकल्काभ्यां तैलं मन्दाग्निसाधितम् ॥३७०॥
नाम्ना महाकषायं तु क्षिप्रमभ्यञ्जनाद्धरेत् ।
व्रणांस्तु देहिनामेतच्चिरकालभवानपि ॥ ३७१ ॥

वल्मीके मनःशिलाद्यं तैलम् ।

मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः ।
जातीपल्लवपत्रैश्च निम्बतैलं विपाचयेत् ॥ ३७२ ॥
वल्मीकं नाशयत्येतद्बहुच्छिद्रं बहुस्रवम् ।

गण्डमालायां फणिज्झकाद्यं तैलम् ।

फणिज्झकः सक्षवको नादेयं नवमालिका ॥ ३७३ ॥
अश्मन्तको विडङ्गानि मयूरकफलानि च ।
वितुन्नकं देवदारु सहदेवा च कट्फलः ॥ ३७४ ॥

बीजं कारञ्जपालाशं मूलकस्यार्जकस्य च ।
महापर्पटको मुस्तं त्रिकटु त्रिफला वचा ॥ ३७५ ॥
सुवर्चला च हिङ्गुश्च समभागानि कारयेत् ।
अक्षमात्रैः पचेदेभिस्तैलप्रस्थं सुखाग्निना ॥ ३७६ ॥
अजाक्षीरेण संयुक्तमजाक्षीरे चतुर्गुणे ।
तदस्य नस्यं दद्याच्च गण्डमालाविनाशनम् ॥ ३७७ ॥
विदारिकां गलग्रन्थिं गलगण्डं च नाशयेत् ।

गण्डमालायां काकादिनीतैलम् ।

काकादनीलाङ्गलिकानदीहतुण्डिकाफलैः ॥ ३७८ ॥
जीमूतबीजकर्कोटैर्विशालाकृतवेधनैः ।
पाठान्वितैः पलार्धांशैर्विषकर्षयुतैः पचेत् ॥ ३७९ ॥
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ।
अनेन गण्डमाला हि चिरजा पूयवाहिनी ॥ ३८० ॥
सिद्ध्यत्यसाध्यकल्पापि पानाभ्यञ्जननावनैः ।

रक्तपित्ते मूर्वाद्यं तैलम् ।

मूर्वामधूकद्राक्षेक्षुरसचन्दनपद्मकैः ॥ ३८१ ॥
सारिवाद्वयनक्ताह्वैस्तैलप्रस्थं विपाचयेत् ।
क्षीरे चतुर्गुणे पक्त्वा कल्कैरक्षसमैर्भिषक् ॥ ३८२ ॥
रक्तपित्तहरं त्वेतद्वर्ण्यं वातघ्नमुत्तमम् ।
मूर्वातैलमिदं नाम्ना सवर्णकरणं परम् ॥ ३८३ ॥

कुष्ठे विषादनं तैलम् ।

कम्पिल्लकनिशायुग्मैः शालनिर्यासचित्रकैः ।
पुरकीटारिसंयुक्तैः पालिकैः सुविचूर्णितैः ॥ ३८४ ॥
एकीकृत्य समैरेभिर्विषस्य च पलद्वयम् ।
आतपे स्थापयेद्धीमान् कटुतैलपरिप्लुतम् ॥ ३८५ ॥
विषादनमिदं तैलं लेपात्सिध्मविचर्चिके ।
हन्ति पामापचीव्यङ्गदुष्टव्रणभगन्दरान् ॥ ३८६ ॥

कुष्ठे जीवन्त्याद्यं तैलम्।

जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लकः पयस्तुत्थम्।
एष घृततैलपाकः सिद्धः सर्जरससंयुक्तः॥ ३८७॥
देयः समधुच्छिष्टो विपादिका तेन शाम्यतेऽभ्यक्ता।
चर्मैककुष्ठं किटिभं सिध्मं शाम्यत्यलसकं च॥ ३८८॥

पामायां जीरकाद्यं तैलम्।

जीरकस्य पलं पिष्टं सिन्दूरार्धपलं तथा।
कटुतैलं पचेदेभिः सद्यः पामाहरं परम्॥ ३८९॥

कृमिरोगे विडङ्गाद्यं तैलम्।

विडङ्गानि स्नुहीक्षीरमर्कक्षीरं तथैव च।
गुञ्जाफलानि गण्डीरं श्यामा निर्दहनी तथा॥३९०॥
एतैर्गोमूत्रसंपिष्टैस्तैलं मूर्ध्नि निधापयेत्।
कृमयः पूरणादेव नश्यन्त्यपि विमार्गगाः॥ ३९१॥

वातरोगे गडूचीतैलम्।

तुलां पचेज्जलद्रोणे गडूच्याः पादशेषितम्।
क्षीरद्रोणयुतं कल्कैः पचेत्तैलाढकं शनैः॥ ३९२॥
पिष्टैर्मधुकमञ्जिष्ठाजीवनीयैर्युतं तथा।
कुष्ठैलागुरुमृद्वीकामांसीव्याघ्रीनखैर्नवैः॥ ३९३॥
हरेणुश्रावणीव्योषशताह्वाशृङ्गिसारिवैः।
त्वक्पत्रागुरुविक्रान्तास्थिरातामलकीघनैः॥ ३९४॥
नतकेसरह्रीबेरपद्मकोत्पलचन्दनैः।
सिद्धं तच्छनकैस्तैलं पानाभ्यञ्जनबस्तिषु॥ ३९५॥
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत्।
तोदकम्परुजायामशिरःकम्पामयार्दितान्॥३९६॥
हन्याद्व्रणकृतान्दोषान् गडूचीतैलमुत्तमम्।

वातरोगे द्वितीयं गडूचीतैलम्।

अमृतायास्तुलाः पञ्च द्रोणेष्वष्टास्वपां पचेत्॥३९७॥

पादशेषं तु सक्षीरं तैलस्यार्धाढकं पचेत् ।
एलामांसीनतोशीरसारिवाकुष्ठचन्दनैः ॥ ३९८ ॥
शतपुष्पाबलामेदामहामेदर्धिजीवकैः ।
काकोलीक्षीरकाकोलीश्रावण्यतिबलानखैः ॥ ३९९ ॥
महाश्रावणिजीवन्तीविदारीकपिकच्छुभिः ।
शतावरीतामलकीकर्कटाख्याहरेणुभिः ॥ ४०० ॥
वचागोक्षुरकैरण्डरास्नाकालासहाचरैः ।
द्विजीरकर्षभसहादारुभिश्चापि कार्षिकैः ॥ ४०१ ॥
मञ्जिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन तु ।
कल्कैस्तत्क्षीणवीर्याग्निबलसंमूढचेतसः ॥ ४०२ ॥
उन्मादवेपापस्मारैर्युक्तांश्च प्रकृतिं नयेत् ।
वातव्याधिहरं श्रेष्ठं तैलाग्र्यममृताह्वयम् ॥ ४०३ ॥

वातरोगे सहचरं तैलम् ।

समूलशाखस्य सहाचरस्य तुलां समेतां दशमूलतश्च ।
पलानि पञ्चाशदभीरुतश्च पादावशेषं विपचेद्वहेऽपाम् ॥ ४०४ ॥
तत्र सेव्यनखकुष्ठहिमैलास्पृक्प्रियङ्गुनलिकाम्बुशिलाजैः ।
लोहितानलदलोहसुराह्वैः कोपनामिशितुरुष्कनखैश्च ॥ ४०५ ॥
तुल्यक्षीरे पालिकैस्तैलपात्रं
सिद्धं कृच्छ्रान् शीलितं हन्ति वातान् ।
कम्पाक्षेपस्तम्भशोषादियुक्तान्
गुल्मोन्मादान् पीनसं योनिरोगान् ॥ ४०६ ॥

वातरोगे नीलसहचरतैलम् ।

सहचरहस्ती नीलोत्पलशतगात्रस्तृषातुरः पतितः ।
सलिलद्रोणतडागे सुतप्तघर्मांशुतप्त इव ॥ ४०७ ॥
तैलप्रस्थमतोऽस्मै दद्यात्तैलाच्चतुर्गुणं च पयः ।
मदगन्धसुरभिसैन्धवकल्कैश्चाक्षोन्मितैर्लिप्तः ॥ ४०८ ॥

एलामृणालकुष्ठप्रियङ्गुकाश्मीरपुरलोहैः ।
श्रीवेष्टकसर्जरसैश्चन्दनशैलेयरजनीभिः ॥ ४०९ ॥
दारुशताह्वापथ्यैः केसररसपेलवघनैश्च ।
तीर्णो मालतीकुसुमैः सहचरनीलाशवनपतितः ॥ ४१०
मेदोस्थिमज्जमांसासृग्रुधिरशुक्रसंश्रयांश्चिरोत्पन्नान् ।
हन्याद्वातविकारानशीतिमेतन्महानीलम् ॥ ४११ ॥

वातरोगे दशमूलाद्यं तैलम् ।

दशाङ्घ्रिकेशरारिष्टब्राह्मीपाठाकटुत्रिकैः ।
शठीपुनर्नवाभार्गीसुरसाम्बुफलत्रिकैः ॥ ४१२ ॥
शङ्खपुष्पीत्वगेलार्कमुनिपादपपल्लवैः ।
अङ्कोटवरुणास्फोतशिरीषकटभीफलैः ॥ ४१३ ॥
कृमिघ्नमूलशम्पाकसर्षपामरदारुभिः ।
प्रियङ्गुहिङ्गुमञ्जिष्ठासुमुखातन्दुलीयकैः ॥ ४१४ ॥
गिरिकर्णीवचाकुष्ठकङ्कुष्ठरजनीद्वयैः ।
मधूकसारसिन्धूत्थसितनीलोत्पलाम्बुदैः ॥ ४१५ ॥
कटुतैलं समैरेभिः पक्वं क्षीरे चतुर्गुणे ।
सोन्मादं हन्त्यपस्मारं पानाभ्यञ्जननावनैः ॥ ४१६ ॥
डाकिनीभूतवेतालनैगमेषादिकान् ग्रहान् ।
कृत्याभिचाररक्षांसि नाशयत्यखिलान्यपि ॥ ४१७ ॥
तैलमेतत्सुरेन्द्रेण नन्दस्य कथितं पुरा ।
बालस्य किल रक्षार्थं विष्णोरमिततेजसः ॥ ४१८ ॥

---

१ अनेकनीलपुष्पयुक्तं सहचरं शतपलमितं समूलपत्रशाखमुत्पाट्य खण्डशः प्रकल्पयित्वा संक्षुद्य द्रवद्वैगुण्यग्रहणविधानात् द्विद्रोणमिते जले प्रक्षिप्य तीव्रातपे शोषयेत् । पादशेषे कषाये गालयित्वा, तैलप्रस्थद्वयं, अष्टप्रस्थमितं दुग्धं, मदगन्धा(सप्तपर्णी)दीनां मालतीपुष्पान्तानां प्रत्येकं कर्षमितानां कल्कं च दत्त्वा मन्दाग्निना तैलं साधयेदिति भावः ।

अभ्यज्य सर्वगात्राणि भोक्तव्यं रिपुवेश्मनि ।
तैलमभ्यञ्जनं श्रेष्ठं वसतोऽरातिसङ्कटे ॥ ४१९ ॥
अथ विलिप्तभगा भगशालिनी यदि रमेत नरं दिवसे शुभे ।
मदनसायकजर्जरितोरसो भवति तस्य तयाऽपहृतं मनः॥४२०॥
ताम्बूलमुखवासेषु व्यञ्जनाहारयोगतः ।
अनामिकाग्रसंयुक्तं वशीकरणमुत्तमम् ॥ ४२१ ॥

भग्ने गन्धतैलम् ।

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ।
दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत् ॥४२२॥
तृतीयं सप्तरात्रं तु भावयेन्मधुकाम्बुना ।
ततः क्षीरं पुनः पीत्वा सुशुष्कांश्चूर्णयेद्बुधः ॥ ४२३ ॥
काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां तथा ।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥ ४२४ ॥
शतपुष्पां च संचूर्ण्य तिलचूर्णेन योजयेत् ।
पीडनार्थे प्रकर्तव्यं सर्वगन्धशृतं पयः ॥ ४२५ ॥
चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक् ।
एलामंशुमतीं पत्रं जीरकं तगरं तथा ॥ ४२६ ॥
रोध्रं प्रपौण्डरीकं च तथा कालानुसारिवाम् ।
शिरीषकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥ ४२७ ॥
पिष्ट्वा शृङ्गाटकं चैव पूर्वोक्तान्यौषधानि च ।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥ ४२८ ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ।
आक्षेपके पक्षघाते तालुशोषे तथार्दिते ॥ ४२९ ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
बाधिर्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥ ४३० ॥
पथ्यं पाने तथाऽभ्यङ्गे नस्ये बस्तिषु भोजने ।
ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते ॥ ४३१ ॥

मुखं च पद्मप्रतिमं ससुगन्धिसमीरणम्।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत्।
राजार्हमेतत्कर्तव्यं राज्ञामेव विचक्षणैः॥ ४३२॥

इति श्रीसोढलग्रथिते गदनिग्रहे तैलाधिकारो द्वितीयः।

---

## अथातस्तृतीयश्चूर्णाधिकारः।

गुल्मे हिङ्ग्वाद्यं चूर्णम्।

हिङ्गु त्रिकटुकं पाठां हपुषामभयां सठीम्।
अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसम्॥ १॥
दाडिमं पौष्करं धान्यमजाजीं चित्रकं वचाम्।
द्वौ क्षारौ लवणे द्वे च चव्यं चैकत्र चूर्णयेत्॥ २॥
चूर्णमेतत्प्रयोक्तव्यमन्नपानेऽप्यनत्ययम्।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा॥ ३॥
पार्श्वहृद्बस्तिशूलेषु गुल्मे वातकफात्मके।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च॥ ४॥
ग्रहण्यर्शोविकारेषु प्लीहपाण्ड्वामयेऽरुचौ।
उरोविबन्धे हिक्कायां श्वासे कासे गलग्रहे॥ ५॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा।
बहुशो गुटिकाः कार्याः कार्मुकाः स्युस्ततोऽधिकाः॥६॥

शूले द्वितीयं हिङ्ग्वाद्यं चूर्णम्।

हिङ्गुग्रन्थिकधान्यकाग्निकवचाचव्याग्निपाठाः सठी
वृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाडिमम्।
पथ्यापुष्करवेतसाम्लहपुषाजाज्याजगन्धैः कृतं
चूर्णं भावितमेतदार्द्रकरसे साद्बीजपूरस्य च॥ ७॥
आध्मानग्रहणीविकारगुदजान् गुल्मानुदावर्तकान्
प्रत्याध्मानगरोदराश्मरिरुजस्तूणीद्वयारोचकान्।

ऊरुस्तम्भमतिश्रमं च मनसो बाधिर्यमष्ठीलिकां
प्रत्यष्ठीलिकया सहापहरति प्राक्पीतमुष्णाम्बुना ॥ ८ ॥
रुक्कुक्षिवङ्क्षणकटीजठरान्तरेषु
बस्तिस्तनांसफलकेषु च पार्श्वयोश्च ।
शूलानि नाशयति वातबलासजानि
हिङ्ग्वाद्यमाद्यमिदमाश्विनसंहितायाम् ॥ ९ ॥

गुल्मे शार्दूलं चूर्णम् ।

हिङ्गूग्राबिडशुण्ठ्यजाजिविजयावाट्याभिधानामयै-
श्चूर्णं कुम्भनिकुम्भमूलसहितैर्भागोत्तरं वर्धितैः ।
पीतं कोष्णजलेन कोष्ठकरुजागुल्मोदरादीनयं
शार्दूलं प्रसभं प्रमथ्य हरति व्याधीन्मृगौघानिव ॥१०॥

गुल्मे नाराचकं चूर्णम् ।

सिन्धूत्थपथ्याकणदीप्यकानां चूर्णानि तोयैः पिबतां कवोष्णैः ।
प्रयाति नाशं कफवातजन्मा नाराचनिर्भिन्न इवामयौघः ॥११॥

गुल्मे पूतीकाद्यं चूर्णम् ।

पूतीकपत्रगजचिर्भटचव्यवह्नि-
व्योषं च संस्तरचितं लवणोपधानम् ।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु ॥ १२ ॥

गुल्मे हिङ्ग्वाद्यं चूर्णम् ।

हिङ्गुत्रिगुणं सैन्धवमस्मात्त्रिगुणं च तैलमैरण्डम् ।
तत्त्रिगुणरसोनरसं गुल्मोदावर्तशूलघ्नम् ॥ १३ ॥

श्वासे विजयं चूर्णम् ।

त्रिकत्रयं वचा हिङ्गुः पाठा क्षारो निशाद्वयम् ।
चव्यतिक्ताकलिङ्गाग्निशताह्वालवणानि च ॥ १४ ॥
ग्रन्थिबिल्वाजमोदं च गणोऽष्टाविंशको मतः ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ १५ ॥

एरण्डतैलसंयुक्तं सद्यो लिह्यात्ततो नरः।
बिडालपदकं चापि पिबेदुष्णेन वारिणा ॥ १६ ॥
श्वासं हन्यात्तथा शोषमर्शांसि च भगन्दरम्।
हृच्छूलं पार्श्वशूलं च बस्तिशूलमरोचकम् ॥ १७ ॥
प्लीहकासप्रमेहांश्च कामलां पाण्डुरोगताम्।
आमवातमुदावर्तमन्त्रवृद्धिं गुदकृमीन् ॥ १८ ॥
हन्याच्च ग्रहणीरोगान् ये मया परिकीर्तिताः।
महाज्वरोपसृष्टानां भूतोपहतचेतसाम् ॥ १९ ॥
अप्रजानां च नारीणां प्रजावर्धनमेव च।
विजयं नाम चूर्णेदं सर्वव्याधिहरं परम् ॥ २० ॥

वातरोगे अजमोदाद्यं चूर्णम्।

अजमोदमरिचपिप्पलिविडङ्गसुदारुचित्रकशताह्वाः।
सैन्धवपिप्पलिमूलं भागा नवस्य पलिकाः स्युः ॥ २१ ॥
शुण्ठी दशपलिका स्यात्पलानि तावन्ति वृद्धदारुकस्यापि।
अभया पलानि पञ्च सर्वाण्येकत्र कारयेच्चूर्णम् ॥ २२ ॥
समगुडवटकानदतस्तच्चूर्णं कोष्णवारिणा पिबतः।
नश्यन्त्यामानिलजाः सर्वे रोगाः सुदारुणाः शीघ्रम् ॥२३॥
विश्वाचीप्रतूनीतूनीरोगाश्च गृध्रसी चोग्रा।
कटिपृष्ठगुदस्फुटनं स्फुटनं चैवास्थिजङ्घयोस्तीव्रम् ॥ २४ ॥
श्वयथुः स्तब्धोऽङ्गसन्धिषु ये चान्ये चामवातसंभूताः।
सर्वे प्रयान्ति नाशं तम इव सूर्यांशुविध्वस्तम् ॥ २५ ॥
क्षुद्बोधमरोगित्वं स्थिरयौवनतां च वलीपलितनाशम्।
कुरुते च तदभ्यासाद्बहूनन्यानपि गुणांश्च ॥ २६ ॥

वातरोगे आभाद्यं चूर्णम्।

आभा रास्ना गडूची च शतावर्यौ महौषधम्।
शतपुष्पाऽश्वगन्धा च हपुषा वृद्धदारकम् ॥ २७ ॥

यवानी चाजमोदं च समभागानि कारयेत्।
सूक्ष्मचूर्णमिदं कृत्वा विडालपदकं पिबेत् ॥ २८ ॥
मद्यैर्मांसरसैर्यूषैस्तक्रेणोष्णोदकेन वा।
सर्पिषा वापि लेह्यं तु दधिमण्डेन वा पुनः ॥ २९ ॥
अस्थिसन्धिगतं वायुं स्नायुमज्जाश्रितं तथा।
कटिग्रहं गृध्रसीं च मन्यास्तम्भं हनुग्रहम् ॥ ३० ॥
ये च कोष्ठगता रोगास्तांश्च सर्वान् प्रणाशयेत्।
आभाद्यं नाम चूर्णेदं सर्वव्याधिविनाशनम् ॥ ३१ ॥

अतिसारे कपित्थाष्टकम्।

यवानीपिप्पलीमूलचातुर्जातकनागरैः।
मरिचेन्द्रयवाजाजीधान्यसौवर्चलैः समैः ॥ ३२ ॥
वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणीकृतैः ॥ ३३ ॥
चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान्।
कासश्वासाग्निसादार्शःपीनसारोचकाञ्जयेत् ॥ ३४ ॥

ग्रहण्यां द्वितीयं कपित्थाष्टकम्।

कनकत्रुटिवराङ्गविश्वौषधं धान्यका
चव्याजाजीयवान्यश्च तुल्यांशकाः।
मरिचदहनदाडिमं धातकी चुक्रिका
बिल्वसौवर्चलं पिप्पलीमूलवृक्षाम्लकम् ॥ ३५ ॥
अपरमपि कपित्थाष्टकं षड्गुणा
पिप्पली सर्वतुल्यांशका शर्करा।
ग्रहणिगदनाशनं वह्निसन्दीपनं
कासहृद्रोगगुल्मार्शसां नाशनम् ॥ ३६ ॥

ग्रहण्यां दाडिमाष्टकम्।

कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम्।
यवानीधान्यकाजाजीग्रन्थिव्योषं पलांशकम् ॥ ३७ ॥

पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः।
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः॥ ३८॥

अतिसारे द्वितीयं दाडिमाष्टकचूर्णम्।

दाडिमस्य पलान्यष्टौ चातुर्जातं पलद्वयम्।
अजाजीनां पलार्धं तु पलार्धं धान्यकस्य च॥ ३९॥
पृथक्पलांशकान् भागान् त्रिकटोर्ग्रन्थिकस्य च।
त्वक्क्षीरी वालकं चैव दद्यात्कर्षसमान् भिषक्॥ ४०॥
शर्करायाः पलान्यष्टौ तदेकस्थं विचूर्णयेत्।
आमातीसारशमनं कासहृत्पार्श्वशूलनुत्॥ ४१॥
हृद्रोगमरुचिं गुल्मं ग्रहणीमग्निमार्दवम्।
प्रयुक्तो नाशयत्येष चूर्णोऽयं दाडिमाष्टकः॥ ४२॥

गलरोगे एलाद्यं चूर्णम्।

एला त्वग्दलनागपुष्पमरिचं स्यात्पिप्पली नागरं
भागैर्भागविवर्धितं क्रमयुतैः सर्वैश्च तुल्या सिता।
एतच्चूर्णमजीर्णगुल्मजठरेऽप्यर्शःसु हृद्रोगिषु
कासश्वासिषु रक्तपित्तिषु हितं कण्ठे विकाराश्च ये॥४३॥

अरोचके बृहदेलाद्यं चूर्णम्

बृहदेला पिप्पलीमूलं चव्यचित्रकनागरम्।
मरिचं दीप्यकं चैव वृक्षाम्लं चाम्लवेतसम्॥ ४४॥
अजमोदाऽजगन्धा च कपित्थं चार्धकार्षिकम्।
अत्यन्तपरिशुद्धायाः शर्करायाश्चतुष्पलम्॥ ४५॥
चूर्णं सेव्यमिदं पुम्भिः परमं रुचिवर्धनम्।
प्लीहकासमथार्शांसि श्वासशूलं वमिज्वरम्॥ ४६॥
निहन्ति दीपयत्यग्निं बलवर्णकरं परम्।
वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम्॥ ४७॥

अरोचके कर्पूराद्यं चूर्णम् ।

कर्पूरचोचकङ्कोलजातीफलदलाः समाः ।
लवङ्गनागमरिचकृष्णाशुण्ठ्यो विवर्धिताः ॥ ४८ ॥
चूर्णं सितासमं हृद्यं रोचनं क्षयकासजित् ।
वैस्वर्यश्वासगुल्मार्शश्छर्दिकण्ठामयापहम् ॥ ४९ ॥
प्रयुक्तं चान्नपाने हि भेषजद्वेषिणां वरम् ।

अरोचके त्वगेलाद्यं चूर्णम् ।

त्वगेलाव्योषधान्याम्लनागकेसरजीरकम् ।
लवलीफलकङ्कोलं लवङ्गं जातिपत्रिका ॥ ५० ॥
भागानिमान् समान् कृत्वा दद्याद्द्विगुणितां सिताम् ।
ईषत्कर्पूरसंयुक्तं चूर्णं रुचिकरं परम् ॥ ५१ ॥

गुल्मे त्रिलवणाद्यं चूर्णम् ।

त्रि[१]लवणहपुषाजमोदाजगन्धावचाहिङ्गुपाठोपकुञ्चीशठी जीरकाजाजिकुस्तुम्बरीबाष्पिकाः कारवी तुम्बरुः स्वर्जिका यावशूको जटा पौष्करं दाडिमं तिन्तिडीकं विडङ्गानि भार्गी वरी वेधको, मिशिमरिचगजोपकुल्याऽभया पञ्चकोलं निकुम्भा विशाला यवानी मुराह्वं च तत्सर्वमेकत्र चूर्णीकृतं बीजपूरार्द्रकेनासकृद्भावितं यः पिबेत्प्रातराहारकालेऽथवा मासमात्रं हिताशी नरः । प्लुतमशिशिरवारिणा जीर्णमद्येन तक्रेण मूत्रेण कोलाम्भसा मस्तुना सर्पिषौष्ट्रेण दुग्धेन कौलत्थयूषेण वा क्षारनिश्चोततोयेन वा दाडिमाद्वा रसेनात्मवानेभिरेवौषधैः साधितं वा घृतं, हृदयगुदकटीयकृत्प्लीहजं तस्य शूलं प्रणश्येत्तथा गुल्मविष्टम्भदुर्नामकृच्छ्रोदराध्मानहिध्मारुचिश्लीपदश्वासकासाः प्रपक्तुं च शक्तो भवेत्पावकः प्राश्यमानानि पाषाणचूर्णान्यपि ॥ ५२ ॥

---

१ अत्र दण्डकाख्यश्छन्दः । तत्र प्रथमं द्वौ न गणौ, अनन्तरं द्वाविंशती रगणा ज्ञेयाः ।

अरोचके सूक्ष्मैलाद्यं चूर्णम्।

सूक्ष्मैला केसरं त्वक्क पत्रं तालीसकं तुगा।
पृथ्वीका दाडिमं धान्यं जीरकं च द्विकार्षिकम्॥५३॥
पिप्पल्यः पिप्पलीमूलं चव्यचित्रकनागरम्।
मरिचं दीप्यकं चैव वृक्षाम्लं साम्लवेतसम्॥ ५४ ॥
अजमोदाजगन्धे च दधित्थं चेति कार्षिकम्।
प्रदेयमिह शुद्धायाः शर्करायाश्चतुष्पलम्।
चूर्णमग्निप्रदं ह्येतत्परमं रुचिवर्धनम्॥ ५५ ॥

अरोचके लवङ्गाद्यं चूर्णम्।

लवङ्गकक्कोलमुशीरचन्दनं
शुद्धं सनीलोत्पलकृष्णजीरकम्।
एला सकृष्णाऽगुरुभृङ्गकेसरं
कणा सविश्वा नलदं सहाम्बुना॥ ५६ ॥
कर्पूरजातीफलवंशरोचनाः
सिताष्टभागं समसूक्ष्मचूर्णितम्।
सुरोचनं तर्पणमग्निदीपनं
बलप्रदं वृष्यतमं त्रिदोषजित्॥ ५७ ॥
उरोविबन्धं तमकं गलग्रहं
सकासहिध्मारुचियक्ष्मपीनसम्।
ग्रहण्यतीसारमथास्रजः क्षयं
प्रमेहगुल्मांश्च निहन्ति सत्वरम्॥ ५८ ॥

अरुचौ द्वितीयं लवङ्गाद्यं चूर्णम्।

लवङ्गजातीफलपिप्पलीनां भागं समं कर्षमितं प्रकुर्यात्।
पलार्धमेकं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य॥५९॥
सितासमं चूर्णमिदं प्रयोजयेत्प्रसह्य रोगान्प्रबलान्निहन्यात्।
कासक्षयारोचकमेहगुल्ममर्शांसि चोग्रान्ग्रहणीमदोषान्॥६०॥

गुल्मे महाषट्पलं घृतम् ।

नागरस्य तुलार्धं तु जलद्रोणे विपाचयेत् ।
चतुर्भागावशेषं तु कषायमवतारयेत् ॥ १८ ॥
शुक्तेन मस्तुना चैव दाडिमैर्बदरोदकैः ।
चतुर्गुणैरिमैस्तोयैर्घृतप्रस्थं विपाचयेत् ॥ १९ ॥
सौवर्चलं बिडं चैव पौतिकं चोपकस्तथा ।
अजाजी पिप्पली चैव अजगन्धा यवाग्रजः ॥ २० ॥
सैन्धवं पञ्चकोलं च हिङ्गुचौद्भिदमेव च ।
एतैः पलार्धकैर्द्रव्यैः शनैर्मृद्वग्निना पचेत् ॥ २१ ॥
कृमिप्लीहोदराजीर्णज्वरगुल्मप्रमेहकान् ।
वातरोगानशेषांश्च हिक्कां शूलमरोचकम् ॥ २२ ॥
पाण्डुरोगं प्रतिश्यायं दौर्बल्यं वह्निसंक्षयम् ।
महाषट्पलमातङ्कान् भिनत्त्यशनिवद्गिरिम् ॥ २३ ॥

उन्मादे कल्याणकं घृतम् ।

विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् ।
स्थिराऽनन्ता हरिद्रे द्वे सारिवे द्वे प्रियङ्गवः ॥ २४ ॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमवल्कलम् ।
तालीसपत्रं बृहती मालत्याः कुसुमं नवम् ॥ २५ ॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मके ।
अष्टाविंशतिभिः कल्कैरेतैरक्षप्रमाणकैः ॥ २६ ॥
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत् ।
अपस्मारे ज्वरे कासे शोषे मन्देऽनले क्षये ॥ २७ ॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ।
वम्यर्शोमूत्रकृच्छ्रे च विसर्पोपहतेषु च ॥ २८ ॥
कण्डूपाण्ड्वामयोन्मादविषप्वस्रग्दरेषु च ।
भूतोपहतचित्तानां गद्गदानामचेतसाम् ॥ २९ ॥

शस्तं स्त्रीणां च वन्ध्यानां धन्यमायुर्बलप्रदम्।
अलक्ष्मीपापरोगघ्नं सर्वग्रहनिवारणम् ॥ ३० ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च।

उन्मादे द्वितीयं कल्याणं घृतम्।

सारिवाद्वितयं पर्ण्यौ नतं कुष्ठं निशाद्वयम् ॥ ३१ ॥
दाडिमं चन्दनं व्याघ्री निकुम्भा त्रिफलेन्द्रिका।
तालीसं पद्मकं चैला मञ्जिष्ठोत्पलदारवः ॥ ३२ ॥
इभोषणा विडङ्गानि प्रियङ्गुश्चाश्मभेदकः।
यवानी जातिमुकुलं मुस्तकं कर्षसंमितम् ॥ ३३ ॥
कल्कैरेभिर्घृतप्रस्थं सिद्धं कल्याणकं स्मृतम्।
रक्तपित्तज्वरोन्मादकासकण्डूविनाशनम् ॥ ३४ ॥

उन्मादे तृतीयं कल्याणकं घृतम्।

धराविशालापत्रैलादेवदार्वेलवालुकैः।
द्विसारिवाद्विरजनीद्विस्थिराफलिनीनतैः ॥ ३५ ॥
बृहतीकुष्ठमञ्जिष्ठानागकेशरदाडिमैः।
वेल्लतालीसपत्रैलामालतीकुसुमोत्पलैः ॥ ३६ ॥
सदन्तिपद्मकहिमैः कर्षांशैः सर्पिषः पचेत्।
प्रस्थं, भूतग्रहोन्मादकासापस्मारपापनुत् ॥ ३७ ॥
पाण्डुकण्डूविषे शोषे मेहे मोहे ज्वरे गरे।
अरेतस्यप्रजसि वा दैवोपहतचेतसि ॥ ३८ ॥
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके।
बल्यं मङ्गल्यमायुष्यं कान्तिसौभाग्यपुष्टिदम् ॥ ३९ ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च।

उन्मादे महाकल्याणकं घृतम्।

एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिम् ॥ ४० ॥
रसे तस्मिन्पचेत्सर्पिर्गृष्टिक्षीरं चतुर्गुणम्।
वरीद्विमेदाकाकोलीकपिकच्छुविषाणिभिः ॥ ४१ ॥

सूर्पपर्णीयुतैरेभिर्महाकल्याणकं परम् ।
बृंहणं सन्निपातघ्नं पूर्वस्मादधिकं गुणैः ॥ ४२ ॥

विसर्पे महागौरं घृतम् ।

क्षीरवृक्षप्रवालानि कुमुदान्युत्पलानि च ।
सौगन्धिकानि पद्मानि शालूकानि बिसानि च ॥ ४३ ॥
मृणालकुशकासेक्षुदर्भगुन्द्रेक्षुवालिकाः ।
नलवेतसकुम्भीकनालीसर्जार्जुनस्वनाः ॥ ४४ ॥
कदलीपत्रशेवालकसेरुघोटकानि च ।
परूषकमधूकानि श्रीपर्ण्यामलकानि च ॥ ४५ ॥
लामज्जकं चन्दनं च विदारी च शतावरी ।
समङ्गा धातकी रोध्रं जीवनीयानि यानि च ॥ ४६ ॥
शीतवीर्यास्तु ये केचिज्जलजानूपसंश्रिताः ।
एतत्संभृत्य संभारं क्षीरद्रोणेषु सप्तसु ॥ ४७ ॥
पचेन्निस्राव्य तच्छीतं मन्थानेन विमन्थयेत् ।
यत्ततो जायते सर्पिस्तत्पचेत्पुनरेव तु ॥ ४८ ॥
द्रव्यैस्तैरेव पूर्वोक्तैः शनैर्मृद्वग्निना भिषक् ।
हन्यादेतद्विसर्पांस्तु सर्वधातुश्रितान् व्रणान् ॥ ४९ ॥
तोयमग्निं यथा दीप्तं नाम्ना गौरं घृतं महत् ।

सप्ताङ्गं घृतम् ।

शङ्खपुष्पीगुडूच्युग्राशतावर्यर्कवल्लिकाः ॥ ५० ॥
मलपूं ब्रह्मसोमां च कल्कीकृत्य घृतं पचेत् ।
दुग्धं चतुर्गुणं दत्त्वा वातश्लेष्महरं च तत् ।
मेधाकरं तथायुष्यं सप्ताङ्गमिति कीर्तितम् ॥ ५१ ॥

अष्टाङ्गं घृतम् ।

मण्डूकीं सवचां सशङ्खकुसुमां ब्राह्मीं गुडूचीं तथा
श्वेतां बाकुचिकां शतावरियुतां सब्रह्मसौवर्चलाम् ।

कृत्वांशैः पलिकैरिमानि विधिवद्द्रव्याणि तैः कल्कितैः
सर्पिःप्रस्थमथाढकेन पयसा युक्त्या पचेद्बुद्धिमान् ॥ ५२ ॥
नाम्नाऽष्टाङ्गमिदं विदेहविहितं ख्यातं घृतं यः पिबेत्
स श्लोकस्य सहस्रमेकदिवसे श्रुत्वाऽखिलं धारयेत् ।
अक्षीणप्रतिभः सुचारुवदनः स्पष्टाभिभाषी भवेत्
लोके शुक्रबृहस्पतिप्रतिसमः पूज्यश्च राज्ञो भवेत् ॥ ५३ ॥

बालग्रहे फलघृतम् ।

बर्हिष्ठकुष्ठमञ्जिष्ठाकट्फलैलानिशाद्वयैः ।
तोयदत्रिफलाकौन्तीवाजिगन्धामरुद्रुमैः ॥ ५४ ॥
वचाजमोदाकाकोलीमेदामधुकपद्मकैः ।
सशर्करैर्हितं सर्पिः पक्वं क्षीरचतुर्गुणम् ॥ ५५ ॥
बालानां ग्रहजुष्टानां पुंसां दुष्टाल्परेतसाम् ।
ख्यातं फलघृतं स्त्रीणां वन्ध्यानां चापि गर्भदम् ॥ ५६ ॥

चातुर्थकज्वरे महापैशाचकं घृतम् ।

त्रायमाणा जया वीरा नाकुली गन्धनाकुली ।
कायस्था च वयस्था च चोरकश्च पलङ्कषा ॥ ५७ ॥
सूकरी चटिला छत्रा सातिच्छत्रा सुमर्कटी ।
मोरटा पूतना केशी स्थिरा कटुकरोहिणी ॥ ५८ ॥
महापुरुषदन्ता च वृश्चिकाली कुटन्नटा ।
सिद्धमेभिर्घृतं पेयं चातुर्थकविनाशनम् ॥ ५९ ॥
महापैशाचकं नाम सर्पिरेतज्ज्वरापहम् ।
भूतग्रहमपस्मारमुन्मादं च नियच्छति ॥ ६० ॥

शोषे जीवन्त्याद्यं घृतम् ।

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
शठीं पुष्करमूलं च व्याघ्रीं गोक्षुरकं बलाम् ॥ ६१ ॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
पिप्पलीं च समां पिष्ट्वा घृतमेभिर्विपाचयेत् ॥ ६२ ॥

एतद्व्याधिसमूहस्य रोगराज्ञः समुच्छ्रितम्।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति॥ ६३॥

महातिक्तकं घृतम्।

निम्बः सप्तच्छदः पाठा गुडूची सशतावरी।
कृतमालः करञ्जौ द्वौ खदिरो वत्सको धवः॥ ६४॥
सपटोलः पर्पटको विशाला चित्रकस्तथा।
एतानि समभागानि कषायमुपकल्पयेत्॥ ६५॥
भेषजानि प्रपेष्याणि तत्रेमानि प्रदापयेत्।
भूनिम्बः कटुका मुस्ता दन्ती पर्पटको वचा॥ ६६॥
विशालातिविषे मूर्वा यष्ट्याह्वं सारिवाद्वयम्।
अवल्गुजा हरिद्रे द्वे दुःस्पर्शा रक्तचन्दनम्॥ ६७॥
कृमिघ्नः पिप्पली पाठा चित्रको देवदारु च।
भल्लातकान्युशीरं च सम्पाकः सकलिङ्गकः॥ ६८॥
एतैरक्षप्रमाणैस्तु घृतस्यार्धाढकं पचेत्।
धात्रीरसस्तु द्विगुणो घृतात्क्वाथश्चतुर्गुणः॥ ६९॥
सर्पिरेतन्नरः पीत्वा सर्वकुष्ठैर्विमुच्यते।
वातरक्तं सवीसर्पं रक्तस्रावं च दारुणम्॥ ७०॥
पित्तासृक्कामलाकण्डूगरान् योगशतैरपि।
असाधितान् महारोगान् महातिक्तं प्रसाधयेत्॥ ७१॥

वातव्याधौ दशमूलाद्यं घृतम्।

द्रोणेऽम्भसः पचेद्भागान् दशमूल्याश्चतुःपलान्।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह॥ ७२॥
पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः।
तथा खर्जूरकाश्मर्यद्राक्षाबदरफल्गुभिः॥ ७३॥
सक्षीरैः सर्पिषः प्रस्थं सिद्धं केवलवातनुत्।
निरत्ययं प्रयोक्तव्यं पानाभ्यञ्जनबस्तिषु॥ ७४॥

कासे बृहत्कण्टकारीघृतम् ।

समूलपत्रशाखायाः कण्टकार्या रसाढके ।
घृतप्रस्थं बलाव्योषविडङ्गशठिचित्रकैः ॥ ७५ ॥
सौवर्चलयवक्षारबिल्वामलकपौष्करैः ।
सैन्धवग्रन्थिपर्णोग्रादेवदारुपयोधरैः ॥ ७६ ॥
वृश्चीवबृहतीपथ्यायवानीदाडिमर्द्धिभिः ।
द्राक्षापुनर्नवाचव्यदुरालम्भाम्लवेतसैः ॥ ७७ ॥
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ।
कल्कैश्च सर्वकासेषु हिक्काश्वासेषु शस्यते ।
कण्टकारीघृतं सिद्धं कफव्याधिविनाशनम् ॥ ७८ ॥

व्रणे जात्याद्यं घृतम् ।

जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः ।
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुद्ध्यन्ति रोहन्ति च ७९

प्रवाहिकायां त्र्यूषणाद्यं घृतम् ।

त्र्यूषणं त्रिफला निम्बं चित्रको गजपिप्पली ।
बिल्वं कर्कोटिका हिंस्रा विडङ्गानि निदिग्धिका ॥ ८० ॥
घृतप्रस्थं पचेदेभिर्गवां मूत्रे चतुर्गुणे ।
पीतं प्रयोगतः काले हन्यादेतत्प्रवाहिकाम् ॥ ८१ ॥

रक्तपित्ते कसेरुकं घृतम् ।

द्राक्षेक्षुकाश्मर्यशतावरीणां तथा विदार्याः स्वरसस्य चैव ।
कसेरुकाणां तु तथा कषायं प्रस्थं पृथक् क्षीरचतुर्गुणं च ॥८२
घृतं तु शेफालिशतावरीणां त्रायन्तिकाया अपि कल्कसिद्धम् ।
प्रायोगिकं सर्पिरुदाहरन्ति कसेरुकं मारुतपित्तघाति ।
विसर्पदाहज्वररक्तपित्ते क्षीणक्षतानां च रसायनीयम् ॥ ८३ ॥

नेत्ररोगे द्राक्षाद्यं घृतम्।

द्राक्षा प्रधाना सितशर्करा च राजादनं स्यान्मधुयष्टिका च।
मञ्जिष्ठनीलोत्पलपुण्डरीकं काकोलियुग्मं त्वथ जीवकश्च॥८४॥
द्व्यक्षप्रमाणैर्विपचेद्घृतस्य प्रस्थं समग्रं पयसा च तुल्यम्।
नेत्रास्रराजीपटलानि काचमश्रुप्रसेकं तिमिरं च हन्ति।
दृष्टिप्रसादं च नवं करोति शिरोर्धरोगे च हितं नराणाम्॥८५॥

रक्तपित्ते दाडिमाद्यं घृतम्।

दाडिमं तिन्तिडीकं च नागपुष्पं शतावरी।
काकोली क्षीरकाकोली विदारी यक्षहस्तकः॥ ८६॥
बीजपूरकमूलं च राजवृक्षात्मगुप्तयोः।
कुष्ठं चेति समैरेतैर्घृतप्रस्थं विपाचयेत्॥ ८७॥
चतुर्गुणेन पयसा जलेनाष्टगुणेन च।
तत्सर्पिः पिबतः सिद्धं कासश्वासापतानकाः॥ ८८॥
हृद्रोगो रक्तपित्तं च ह्यचिराद्यान्ति संक्षयम्।

योनिरोगे बृहत्पञ्चमूलाद्यं घृतम्।

पञ्चमूलं बृहद्व्याघ्री त्रिवृदेरण्डकः पलम्।
प्रत्येकं, तिल्वकस्याथ प्रस्थार्धं प्रस्थमुत्तमम्॥ ८९॥
जलद्रोणे विपाच्यैतद्ग्राह्यं पादावशेषितम्।
पादशेषे घृतप्रस्थं दध्याढकयुतं न्यसेत्॥ ९०॥
पलत्रयं यवक्षारकल्कं युक्त्या विपाचयेत्।
योनिरोगे गुल्मरोगे वर्ध्मेष्वप्युदरेषु च॥ ९१॥

अर्शसि पिप्पल्याद्यं घृतम्।

पिप्पलीमरिचहिङ्गुनागरं मातुलुङ्गमथ बिल्वशुण्ठिका।
कुष्ठधान्यकमथाम्लवेतसं क्षारवन्ति लवणानि पञ्च च॥९२॥
तिन्तिडीकमथ कारवी वचा दाडिमं च चविका तथैव च।
चित्रकं च सपुनर्नवं भवेद्धस्तिपिप्पलियुता ह्यजाजिका॥९३॥

शुक्तिका बदरमूलपौष्करं पत्रकेण सह तुम्बरु स्मृतम्।
कर्षभागसहितांस्तथा हरेत् श्लक्ष्णपिष्टमथ संनयेत्ततः॥ ९४॥
प्रस्थमत्र तु घृतस्य दापयेत् दध्न एव च भवेत्तथाढकम्।
सर्वमेतदभिमृश्य शास्त्रतः पाचयेत मृदुनाऽग्निना सुखम्॥९५॥
मारुतोपहतगात्रचेतसां पार्श्वपृष्ठहनुजत्रुरोगिणाम्।
क्षयगरविषदूषितान् मनुष्यान् गतवयसो बलवर्णविप्रयुक्तान्।
घृतमिदमगदान् करोति सद्यः पवनकृतान् शमयेच्च सर्वरोगान्॥

शोषे जीवन्त्याद्यं घृतम्।

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शठीं पुष्करमूलं च व्याघ्रीं गोक्षुरकं बलाम्॥ ९७॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
पिप्पलीं च समां पिष्ट्वा घृतं वैद्यो विपाचयेत्॥ ९८॥
एतद्व्याधिसमूहस्य रोगराज्ञः समुच्छ्रितम्।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति॥ ९९॥

शिरोरोगे मायूरं घृतम्।

दशमूलीबलारास्नामधुकत्रिफलैः सह।
मायूरं पक्षपादान्त्रशकृत्पित्तास्यवर्जितम्॥ १००॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुरैः कार्षिकैर्द्रव्यैः शिरोरोगार्दितापहम्॥ १०१॥
कर्णनासाक्षिजिह्वास्यगलरोगविनाशनम्।
मायूरमिति विख्यातमूर्ध्वजत्रुगदापहम्॥ १०२॥

महामायूरं घृतम्।

एतेनैव कषायेण घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः॥ १०३॥
जीवन्तीत्रिफलामेदामृद्वीकर्द्धिपरूषकैः।
समङ्गाचविकाभार्गीकाश्मरीसुरदारुभिः॥ १०४॥

आत्मगुप्तामहामेदातालखर्जूरमस्तकैः ।
मधुरापिण्डखर्जूरशृङ्गीजीवकपद्मकैः ॥ १०५ ॥
शतावरीविदारीक्षुबृहतीसारिवायुतैः ।
पुनर्नवातुगाक्षीरीकाकोलीधन्वयासकैः ॥ १०६ ॥
मधूकाक्षोटवातामसुञ्जाताभिषुकैरपि ।
द्रव्यैरेभिर्यथालाभं घृतं सम्यग्विपाचयेत् ॥ १०७ ॥
तत्पक्वं नावनेऽभ्यङ्गे पाने बस्तौ च योजयेत् ।
शिरोरोगेषु सर्वेषु कासे श्वासे च दारुणे ॥ १०८ ॥
मन्यापृष्ठग्रहे शोषे स्वरभेदे तथाऽर्दिते ।
योनिशुक्रप्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ॥ १०९ ॥
ऋतुस्नाता तथा नारी पीत्वा पुत्रं प्रसूयते ।
महामायूरमित्येतद्घृतमात्रेयपूजितम् ॥ ११० ॥

अर्शोरोगेऽवाक्पुष्प्याद्यं घृतम् ।

अवाक्पुष्पी बला दार्वी पृष्ठिपर्णी त्रिकण्टकः ।
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥ १११ ॥
कषाय एतैः, पेष्यास्तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥ ११२ ॥
कलिङ्गाः शाल्मलीपुष्पं वीरा चन्दनमञ्जनम् ।
कट्फलं चित्रको मुस्ता प्रियङ्ग्वतिविषे स्थिरा ॥ ११३ ॥
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका ।
बिल्वं मोचरसः पाठा भागाः कर्षसमाः पृथक् ॥ ११४ ॥
चतुःप्रस्थे शृतं प्रस्थं कषायमवतारयेत् ।
(त्रिंशत्पलान्वितः प्रस्थो विज्ञेयो द्विपलाधिकः ।) ॥११५॥
सुनिषण्णकचाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च ।
सर्वैरेभिर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ११६ ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥ ११७ ॥

उन्मादे चापि बहुशः शोफे शूले गुदाश्रये ।
मूत्रग्रहे मूढवाते मन्देऽग्नावरुचौ तथा ॥ ११८ ॥
प्रयोज्यं विधिवत्सर्पिर्बलवर्णाग्निवर्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ ११९ ॥

अपतन्त्रके शुकनासाद्यं घृतम् ।

शुकनासा नागवल्ली द्वे बृहत्यौ महौषधम् ।
निचुलश्चैव भार्गी च काकादन्युपचेलिका ॥ १२० ॥
पुनर्नवा चेति समैरक्षमात्रैः पचेद्भिषक् ।
तोयाढके घृतप्रस्थं सिद्धं तच्चापि पाययेत् ॥ १२१ ॥
कासं श्वासं महाहिक्कां हृद्रोगं सापतन्त्रकम् ।
नातिक्रामेदिदं सर्पिर्वेलामिव महोदधिः ॥ १२२ ॥

उन्मादे चेतसं घृतम् ।

श्यामा मधुरसा रास्ना दशमूलं शतावरी ।
श्वदंष्ट्रा शणमूलं च तैर्युक्त्या क्वाथकल्कितैः ॥ १२३ ॥
साधितं चेतसं नाम घृतं चेतोविकारनुत् ।
उन्मादमदमूर्च्छायज्वरापस्मारभेषजम् ॥ १२४ ॥

क्षीणक्षते समदुग्धकं घृतम् ।

षोडशभिर्जलपात्रैर्मृद्वीकायाः पलानि दश षट् च ।
अष्टौ मधुकपलानि छागान्मांसात्तुलार्धं च ॥ १२५ ॥
अवशिष्टपादतोयं पूतं शीतं कषायमवतार्य ।
दत्त्वा कषायतुल्यं पयोऽथ नवसर्पिषः प्रस्थम् ॥ १२६ ॥
ऋषभकजीवकमेदाविदारिवीरात्मगुप्तानाम् ।
भव्याक्षोटनिकोचकशृङ्गाटकपद्मकबीजानाम् ॥ १२७ ॥
भागानक्षसमानथ संसाधयेत्तु मृद्वग्नौ ।
सम्यक् सिद्धे तस्मिन् सितशर्करापलान्यष्टौ ॥ १२८ ॥
मधुनश्च पलान्यष्टौ चत्वारि पलानि पिप्पलीचूर्णात् ।
समदुग्धकघृतमेतज्जनकेश्वरपूजितं समुद्दिष्टम् ॥ १२९ ॥

क्षीणक्षतेऽल्पशुक्रे तद्रक्तपैत्तिकेषु रोगेषु।
स्त्रीकामेषु च देयं बल्यं वृष्यं च घृतमेतत् ॥ १३० ॥

वातगुल्मे हिङ्ग्वाद्यं घृतम्।

हिङ्गुसौवर्चलव्योषविडदाडिमदीप्यकैः।
पुष्कराजाजिधान्याम्लवेतसक्षारचित्रकैः ॥ १३१ ॥
शठीवचाजगन्धैलासुरसैर्दधिसंयुतैः।
शूलानाहहरं सर्पिः साधयेद्वातगुल्मिनाम् ॥ १३२ ॥

इति श्रीशोढलग्रथिते गदनिग्रहे परिशिष्टः प्रथमो घृताधिकारः समाप्तः।

---

## अथ परिशिष्टो द्वितीयस्तैलाधिकारः।

बृहत्सहचरतैलम्।

क्वाथे साहचरे शतावरियुते क्षुद्रामृतैरण्डजे
श्योनाकारणिबिल्वगोक्षुरयुते सिंहाग्निमन्थोद्भवे।
रास्नोशीरविशालदारुतगरैस्त्वक्पत्रमेदानखैः
स्पृक्काशैलवनैलवालुसरलैः कङ्कोलकुष्ठोत्पलैः ॥ १ ॥
कौन्तीकेशीबलाद्विसारिवनिशाश्यामाशताह्वानतै-
र्मञ्जिष्ठापुरसिह्लचन्दनवरैश्चण्डाह्वस्थौणेयकैः।
श्रीवेष्टागरुरोध्रकुङ्कुमवरैः कल्कैः समांशैरिमै-
स्तैलं क्षीरसमं विपाच्य विधिना बस्तौ च नस्ये ध्रुवम् ॥ २ ॥
पानाभ्यङ्गविधौ नियोजितमिदं वातादिसर्वामयान्
गुल्माष्ठीलशिरोर्तिशूलमुदरं श्वासामकासज्वरम्।
शोफं प्लीहगुदामयं च जठरं धातुक्षयाध्मानकं
अर्शःकुष्ठभगन्दरं च शमयेत्सर्वान् व्रणान् हन्ति च ॥ ३ ॥
जयति पवनरोगान् कामलां विड्विबन्धं
दिननिशितिमिरान्ध्यं गृध्रसीं मूर्ध्निवातम्।

सहचरमिति नाम्ना तैलमेतत्प्रसिद्धं
धनपतिनृपयोग्यं भाषितं शम्भुनैव ॥ ४ ॥

तरक्षाद्यं तैलम् ।

तरक्षस्य शृगालस्य पादावन्त्राणि संत्यजेत् ।
कोष्ठसारादिकं सर्वमुत्क्वाथ्य बहुलेऽम्भसि ॥ ५ ॥
पादशेषं परिगृह्य छागगव्यपयोन्वितम् ।
तैलं रससमं दत्त्वा मदिरामस्तुकाञ्जिकम् ॥ ६ ॥
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ।
करञ्जस्त्रिवृता मुस्ता पत्राङ्गं रेणुकं त्वचम् ॥ ७ ।
क्षारद्वयं त्रिकटुकं पञ्चैव लवणानि च ।
वचा तुरगगन्धा च मञ्जिष्ठा सर्जगुग्गुलू ॥ ८ ॥
मेदा रास्ना च वर्षाभूरेला शैलेयकं बला ।
एतैरर्धपलैर्द्रव्यैः शनैर्मृद्वग्निना पचेत् ॥ ९ ॥
तैलं तेनैव नश्यन्ति रोगा देहे शरीरिणाम् ।
अशीतिं वातजान् रोगान् शोफं शूलं कटिग्रहम् ॥ १० ॥
मांसमेदःश्रितं वायुं हर्षं चैव भगन्दरम् ।
लूतां सद्योव्रणं चैव नाडीदुष्टव्रणानि च ॥ ११ ॥
भूतग्रहमपस्मारमुन्मादं च नियच्छति ।
हन्ति वातमसाध्यं च पामादद्रुविचर्चिकाः ॥ १२ ॥
एतत्तैलं सदाभ्यङ्गात्सर्वरोगहरं नृणाम् ।

व्याघ्रतैलम् ।

व्याघ्रं शिरः समादाय क्वाथयित्वा जले बहु ॥ १३ ॥
उदूखले क्षोदयित्वा रसं नीत्वा सुगालितम् ।
दद्यात्कटाहे सुदृढे पचेत्पाकं विधानतः ॥ १४ ॥
द्रव्याण्येतानि मतिमान् पादमानेन दापयेत् ।
देवदारु वचा कुष्ठं तगरं चन्दनं घनः ॥ १५ ॥

मञ्जिष्ठा पुष्करं रास्ना चातुर्जातकसैन्धवम्।
पिप्पली मरिचं शुण्ठी मांसी सहचरो जलम्॥ १६॥
अश्वगन्धात्मगुप्ते च ऋषभकश्च शतावरी।
श्वदंष्ट्रा केतकी मूर्वा मधुकं चागुरुस्तथा॥ १७॥
जातीफलं च सुमनापत्री कटुकरोहिणी।
ग्रन्थिकं शुक्लकन्दा च शतपुष्पा पुनर्नवा॥ १८॥
जीवनीयो गणश्चैव रालाकेसरबोलकम्।
नखं च कृष्णसारश्च वत्सनाभस्तथैव च॥ १९॥
अस्य तैलस्य सिद्धस्य शृणु वीर्यमतः परम्।
अशीतिवातजान् रोगान् हन्यादाशु प्रयोजितः॥ २०॥
अश्वानां वातभग्नानां गजानां शिशूनामपि।
अंशशोषे खुडे वाते क्रोष्टुशीर्षे कटिग्रहे॥ २१॥
मन्यास्तम्भे हनुश्रोत्रवाते मन्दे तथाऽनले।
वन्ध्यानां पुत्रजननं षण्ढानां कामवर्धनम्॥ २२॥
अश्विभ्यां निर्मितं चैव प्रजानां हितकारकम्।
अनेनैव विधानेन तैलं तारक्षजं पचेत्॥ २३॥

वातारितैलम्।

शतावर्यास्तुलामेकां तुलां गोक्षुरकस्य च।
तुलार्धं तिलतैलस्य चैरण्डस्य पलानि षट्॥ २४॥
एरण्डपत्रस्वरसपलानि नव कारयेत्।
बुकशिग्रुकतर्कारीसिन्दुवारसुवर्णकात्॥ २५॥
नीलिकाग्रन्थिपर्णाभ्यां करञ्जकेशरञ्जकात्।
षट्पलं गुग्गुलोर्दत्त्वा तैलं मृद्वग्निना पचेत्॥ २६॥
कौब्ज्याक्षेपकपाङ्गुल्यसुप्तत्वङ्मन्दगामिताः।
पक्षाघातहनुस्तम्भसन्धिरोगादिकानपि॥ २७॥
नाशयेत्तत्क्षणादेव तमः सूर्योदये यथा।
तैलं वातारिनामेदं सर्ववातहरं परम्॥ २८॥

दारुणके सारिवाद्यं तैलम् ।

सारिवोग्रामृतायष्टीत्रिफलानीलमुत्पलम् ।
नीलीभृङ्गारकासीसमहानिम्बफलानि च ॥ २९ ॥
कटुतैलं पचेदेभिः सार्धं यवरसेन तु ।
कण्डूं दारुणकं हन्ति शिरोरोगे च शस्यते ॥ ३० ॥

वातरोगे दशाङ्गतैलम् ।

तर्कारीभृङ्गशिग्रूणां निर्गुण्डीशणयोस्तथा ।
वातघ्नवासाजातीनां निम्बभास्करयोरपि ॥ ३१ ॥
स्वरसं तु समादाय प्रत्येकं प्रस्थमानतः ।
प्रस्थं तु तिलतैलस्य शनैर्मृद्वग्निना पचेत् ॥ ३२ ॥
एरण्डमूलवर्षाभूहयगन्धाशतावरी-
रास्नागोक्षुरकाश्चैव शतपुष्पा च सैन्धवम् ॥ ३३ ॥
प्रत्येकं कर्षमादाय कर्षार्धं त्रिकटोस्तथा ।
एलात्वक्पत्रमांसीनां कर्षार्धं च विनिक्षिपेत् ॥ ३४ ॥
तैलेनानेन नश्यन्ति वातरोगाः सुदारुणाः ।
आक्षेपकं हनुस्तम्भमपतन्त्रकमर्दितम् ॥ ३५ ॥
अवबाहुकविश्वाचीपक्षाघातापतानकम् ।
स्नायुसन्धिगतं वातं सप्तधातुगतं तथा ॥ ३६ ॥
ऊरुस्तम्भं वातरक्तमामवातं सुदारुणम् ।
दशाङ्गसंज्ञकं तैलं हन्यादन्यांश्च वातजान् ॥ ३७ ॥

कर्पूराद्यं तैलम् ।

कर्पूरचन्दनवचासुरदारुमूर्वा-
गन्धर्वमूलरजनीद्वयसिन्धुजातैः ।
मेदाद्वयत्रिकटुपुष्करमूलकुष्ठ-
रास्नाह्वयासुहरितालककुङ्कुमैश्च ॥ ३८ ॥
पथ्याक्षकास्थितगरागरुसारमेष-

शृङ्गीजटाह्वययुतैः खलु कल्कितैश्च ।
गोदुग्धयुक् कटुकतैलमिदं विपक्वं
ख्यातं निहन्ति सहसा विविधा रुजश्च ॥ ३९ ॥

ज्वरे लाक्षादिकं तैलम् ।

लाक्षारससमं तैलं तैलान्मस्तु चतुर्गुणम् ।
अश्वगन्धानिशादारुकौन्तीकुष्ठाब्जचन्दनैः ॥ ४० ॥
मूर्वारोहिणिकारास्नाशताह्वामधुकैः सह ।
सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिभिः ॥ ४१ ॥
सर्वज्वरविषोन्मादश्वासापस्मारकासनुत् ।
यक्षराक्षसभूतघ्नं गर्भिणीनां च शस्यते ॥ ४२ ॥
पित्तज्वरेण तीव्रेण दह्यमानस्य देहिनः ।
प्रवातमन्दिरस्थस्य कुर्याच्छीतामिमां क्रियाम् ॥ ४३ ॥

अन्वासनं तैलम् ।

पिप्पली पौष्करं मूलं शतपुष्पा वचा शठी ।
यष्ट्याह्वं देवदारुश्च चित्रको मदनात्फलम् ॥ ४४ ॥
बिल्वं कुष्ठं च कल्केन तैलात्पादांशकेन हि ।
तैलतो द्विगुणं क्षीरं दत्त्वा मृद्वग्निना पचेत् ॥ ४५ ॥
एतदन्वासनं नाम गुदस्रावं प्रवाहिकाम् ।
गुदव्यथां पुरीषस्य प्रवृत्तिं च पुनः पुनः ॥ ४६ ॥
वङ्क्षणस्यावरोधं च गलरोधं कटिग्रहम् ।
निहन्ति वातजान् रोगान् दीपयत्यपि चानलम् ॥ ४७ ॥

महानीलं तैलम् ।

ककुभस्य श्रीपर्ण्याः पुष्पं जम्बूफलं प्रियङ्गुश्च ।
मञ्जिष्ठा त्रिफलागरुमदनफलं चित्रकश्चैव ॥ ४८ ॥
नीलोत्पलमृणालकबीजककर्दमकनील्यश्च ।
भल्लातः स्रोतोञ्जनमाम्रास्थिकासीसपौण्डरीकं च ॥ ४९ ॥

मदयन्ती बाकुचिका रोध्रं चैतैस्तु समभागैः ।
तुलसीपत्रं बीजं सणस्य सूर्यभक्ता च ॥ ५० ॥
काकमाचीदारुकयष्टीमधुमार्कवं च सैरेयः ।
एतैर्द्विगुणैः कल्कीकृतैर्बिभीतमज्जतैलं च ॥ ५१ ॥
कल्काच्चतुर्गुणितं, तच्चतुर्गुणोऽथ धात्रीस्वरसः ।
सूर्यातपे विपाच्यं नाम्ना तैलं महानीलम् ॥
पलितादिषु प्रयोज्यं जत्रूर्ध्वगेषु च निपुणतरैः ॥ ५२ ॥

पलिते नील्याद्यं तैलम् ।

नीलीदलं भृङ्गरजोऽर्जुनत्वक् पिण्डीतकं कृष्णमयोरजश्च ।
बीजोद्भवं साहचरं च पुष्पं पथ्याक्षधात्रीसहितं विपाच्य ५३
एकीकृतं सर्वमदः प्रमाय पङ्केन तुल्यं नलिनीभवेन ।
संयोज्य पक्षं कलशे निधाय लौहे दृढे सद्मनि सापिधाने ५४
एतेन तैलं विपचेद्विमृश्य रसेन भृङ्गत्रिफलाभवेन ।
आसन्नपाके च परीक्षणार्थं पक्षं बलाकाभवमाक्षिपेच्च ॥ ५५ ॥
भवेद्यदा तद्भ्रमराङ्गनीलं तदा विपक्कं विनिधाय पात्रे ।
कृष्णायसे मासमवस्थितं तदभ्यङ्गयोगात्पलितानि हन्यात् ५६

ऊरुस्तम्भे द्विपञ्चमूल्याद्यं तैलम् ।

द्वे पञ्चमूल्यौ त्रिफला चित्रको देवदारु च ।
एकाष्ठीला त्वपामार्गः श्रेयसी वायसी सुधा ॥ ५७ ॥
काला भार्गी पृथक्पर्णी सुवहा मदयन्तिका ।
विशल्योशीरकाश्मर्यहिंस्रादार्व्यस्तथाऽम्लिका ॥ ५८ ॥
चिरबिल्वो विशोकश्च बला चांशुमती तथा ।
पयस्या पीलुपर्णी च सगुडूची शतावरी ॥ ५९ ॥
एषां पञ्चपलान् भागान् जलद्रोणेषु सप्तसु ।
अष्टभागावशेषेण पचेत्तैलं शनैः शनैः ॥ ६० ॥
कुष्ठं च शतपुष्पा च चित्रकत्र्यूषणं वचा ।
देवदार्वगरु श्रेष्ठं विडङ्गं मुस्तमेव च ॥ ६१ ॥

अश्वगन्धा स्थिरा पाठा मूर्वा श्योनाकमेव च।
पिप्पली शृङ्गवेरं च दन्ती हिङ्ग्वम्लवेतसौ ॥ ६२ ॥
गर्भेणानेन भिषक्कषायेण च साधयेत्।
सिद्धं शीतं च पूतं च क्षौद्रेण सह संसृजेत् ॥ ६३ ॥
तदस्य दद्यात्पानार्थं तदेवाभ्यञ्जने भवेत्।
ऊरुस्तम्भश्चिरोत्पन्नस्तैलेनानेन शाम्यति ॥ ६४ ॥
आढ्यवातं श्लीपदानि खुडवातांश्च नाशयेत्।

अर्शःसि कासीसाद्यं तैलम्।

काशीसदन्तीसिन्धूत्थकरवीरानलैः पचेत् ॥ ६५ ॥
तैलमर्कपयोन्मिश्रमभ्यङ्गात्पायुकीलजित्।

कृमिरोगे महावीर्यं तैलम्।

शशमार्जारयोर्बभ्रोः कपेर्वृषवराहयोः ॥ ६६ ॥
मांसानां द्वे तुले सम्यक् पचेद्द्रोणेषु सप्तसु।
अष्टभागावशेषेण तेन तैलाढकं पचेत् ॥ ६७ ॥
भासवायसकाकानां गृध्रस्याखोः शुकस्य च।
कलविङ्ककुलिङ्गानां कुक्कुटस्य च या वसा ॥ ६८ ॥
मज्जाश्च दापयेदेषां पित्तान्यपि च लाभतः।
अपामार्गफलं भार्गी बीजं शैरीषमेव च ॥ ६९ ॥
फणिज्झकं विडङ्गानि शिग्रुकस्य त्वचस्तथा।
त्र्यूषणं हिङ्गुकफलं वचा कुष्ठं सचन्दनम् ॥ ७० ॥
हस्तिपर्ण्याः शिरीषस्य ककुभस्यासनस्य च।
पलाशस्यारिमेदस्य मूलं बीजं च संहरेत् ॥ ७१ ॥
पिचुमन्दस्य निर्यासः शल्लक्या गुग्गुलोस्तथा।
हिङ्ग्वम्लवेतसौ चापि तथा ग्राह्या निदिग्धिका ॥ ७२ ॥
तुल्यान्येतानि गर्भाणि तैलं कर्णप्रपूरणम्।
नावनं चावगाहश्च शीर्षकृमिविनाशनम् ॥ ७३ ॥

तैलस्यास्य प्रणीतस्य गन्धेन क्रमयः स्थिराः ।
नश्यन्ति न विवर्धन्ते बलात्सुबहवोऽपि वा ॥ ७४ ॥
युक्त्यास्मिन् क्रमयस्तैले नस्ये तु प्रतिपादिते ।
तालुं भित्त्वाऽऽशु शिरसः प्रद्रवन्त्युपपीडिताः ॥ ७५ ॥
सर्वक्रमिहरं ह्येतत्तैलं शिरसि देहिनाम् ।
बलाबलं चिन्तयित्वा नस्यं तदवचारयेत् ॥ ७६ ॥
क्रमिभिर्भक्ष्यमाणानां नराणामेतदुत्तमम् ।
तैलमेतन्महावीर्यं सर्वक्रमिविनाशनम् ॥ ७७ ॥

अन्त्रवृद्धौ गन्धर्वतैलम् ।

शतमेरण्डमूलस्य शुण्ठीपलयवाढके ।
जलद्रोणेऽथ पयसा पचेदष्टगुणेन तु ॥ ७८ ॥
प्रस्थमेरण्डतैलस्य सप्तला द्विपलं तथा ।
द्विपलं शृङ्गवेरस्य गर्भं दत्त्वा शनैः पचेत् ॥ ७९ ॥
पिबेत्तन्नियतः शुद्धो नरः क्षीरान्नभुक् भवेत् ।
अन्त्रवृद्धिं निहन्त्याशु तैलं गन्धर्वसंज्ञितम् ॥ ८० ॥

कर्णरोगे लाङ्गल्याद्यं तैलम् ।

लाङ्गलीकुष्ठमरिचं शुण्ठी मागधिका घनम् ।
सरसाञ्जनकासीसं जतुसैन्धवगुग्गुलु ॥ ८१ ॥
मनःशिलाले निर्गुण्डी बिल्वं भल्लातकं तथा ।
कार्षिकैर्देवदारूत्थतैलस्य द्विपलेन च ॥ ८२ ॥
कुडवं तिलतैलस्य पचेन्मूत्रे चतुर्गुणे ।
तत्कर्णपूरणात्क्षिप्रं पूयस्रावनिवारणम् ॥ ८३ ॥
क्रमिघ्नं दुष्टनाडीघ्नं व्रणानां चैव रोपणम् ।

शिरोरोगे महानीलं तैलम् ।

आदित्यवल्ल्या मूलानि कृष्णसैरेयकस्य च ॥ ८४ ॥
सुरसस्य च पत्राणि फलं कृष्णसणस्य च ।
मार्कवः काकमाची च मधुकं देवदारु च ॥ ८५ ॥

पृथक् दशपलांशानि पिप्पली त्रिफलाऽञ्जनम्।
प्रपौण्डरीकं मञ्जिष्ठा रोध्रं कृष्णागरूत्पलम् ॥ ८६ ॥
आम्रास्थि कर्दमः कृष्णो मृणालं रक्तचन्दनम्।
नीली भल्लातकास्थीनि कासीसं मदयन्तिका ॥ ८७ ॥
सोमराज्यसनात्पुष्पं कृष्णपिण्डितचित्रकौ।
पुष्पाण्यर्जुनकाश्मर्योः श्यामा जम्बूफलानि च ॥ ८८ ॥
पृथक् पञ्चपलांशानि तैः पिष्टैराढकं पचेत्।
बिभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ॥ ८९ ॥
कुर्यादादित्यपाकं च यावत् शुष्को भवेद्रसः।
लोहपात्रे ततः पूतं संशुद्धमथ योजयेत् ॥ ९० ॥

कुष्ठे गुञ्जामूलाद्यं तैलम्।

गुञ्जिकामूलत्रिफलात्रिशूलीपुरतालकैः।
पुत्रञ्जीवास्थिसिन्दूरमधूच्छिष्टनिशायुगैः ॥ ९१ ॥
विशानलशिखाकन्दवचापरशुच्छिन्नकैः।
पृथक्पलार्धकैः पिष्टैस्तैलमर्धाढकं कटोः ॥ ९२ ॥
समालोड्य पचेत्सम्यग्गवां मूत्रे चतुर्गुणे।
विपाच्य मतिमान् वैद्यः सर्वकुष्ठव्रणापहम् ॥ ९३ ॥
तैलं कुष्ठहरं वर्ण्यं फणिकीटविषापहम्।
कण्डूविचर्चिकासिध्मवातासृक्शमनं परम् ॥ ९४ ॥

मञ्जिष्ठाद्यं तैलम्।

मञ्जिष्ठा पद्मकं कुष्ठं चन्दनं गैरिकं बला।
हरिद्रे द्वे प्रियङ्गुश्च नागं यष्टी सवाकुची ॥ ९५ ॥
दारु प्रपौण्डरीकं च पिष्ट्वाऽर्धपलिकानि तु।
तैलप्रस्थं गवां क्षीरं दत्त्वा क्वाथं तथासनात् ॥ ९६ ॥
चतुर्गुणं भृङ्गरसं शनैर्मृद्वग्निना पचेत्।
अस्य तैलस्य पक्वस्य शृणु वीर्यमतः परम् ॥ ९७ ॥
केशशाते शिरोदुःखे मन्यास्तम्भे हनुग्रहे।
दन्तकर्णाक्षिशूले च नस्येऽभ्यङ्गे च योजयेत् ॥ ९८ ॥

सुकुञ्चिताग्रान् सुस्निग्धान् केशान् संजनयेद्बहून् ।
पलिते चेन्द्रलुप्ते च तैलमेतत्प्रशस्यते ॥ ९९ ॥
मञ्जिष्ठाद्यमिदं नाम्ना शिरोरोगनिवारणम् ।

कुष्ठे सिद्धार्थकतैलम् ।

करवीरवचातुम्बरुरसाञ्जनकरञ्जभृङ्गलाक्षाभिः ॥ १०० ॥
सारुष्करसिद्धार्थकमूलकबीजाग्निगण्डीरैः ।
रजनीद्वयमञ्जिष्ठारग्वधविडङ्गमाक्षीकैः ॥ १०१ ॥
सैन्धवकटुकालाबुपिचुमर्दास्फोटमालतीभिश्च ।
सर्षपतैलं कारञ्जं वा गवां मूत्रेण वै सिद्धम् ॥ १०२ ॥
द्विगुणेन साधितमचिरादभ्यङ्गाद्धन्ति कुष्ठानि ।
अष्टादशापि सिद्धं तैलं सिद्धार्थकं नाम ॥ १०३ ॥

इति श्रीसोढलग्रथिते गदनिग्रहे परिशिष्टे द्वितीयस्तैलाधिकारः ।

---

## अथातः परिशिष्टस्तृतीयश्चूर्णाधिकारः ।

मन्दाग्नौ शुण्ठ्याद्यं चूर्णम् ।

शुण्ठीं ससौवर्चलचित्रकाभयां सरामठां दाडिमसैन्धवान्वितां ।
खादन्ति ये मन्दहुताशना भुवि भवन्ति ते वाडवतुल्यवह्नयः॥१॥

हृद्रोगे तिक्तकं चूर्णम् ।

मुस्तैलाचन्दनोशीरं यवानी व्योषवत्सकौ ।
फलं त्वक् कटुका दारु दार्वी त्वक्पर्पटस्तथा ॥ २ ॥
पटोलपत्रं षड्ग्रन्था मूर्वाभूनिम्बशिग्रुकाः ।
त्रायमाणा च सौराष्ट्री सुरा प्रतिविषा समाः ।
तिक्तकं नाम हृद्गुल्मशूलघ्नं सन्निपातनुत् ॥ ३ ॥

कुष्ठे लाक्षाद्यं चूर्णम् ।

लाक्षा दन्ती च मूर्वा मधुरसवचाद्वीपिपाठाद्रिकर्णी-
ग्रन्थ्यक्पुष्पीविडङ्गं त्रिकटुकरजनीसप्तपर्णाटरूषम् ।

रक्ता निम्बं सुरतरु वचा पञ्चमूल्यौ च चूर्णं
पीत्वा मासं जयति मितभुक् गव्यमूत्रेण कुष्ठम् ॥ ४ ॥

ग्रहण्यां पञ्चामृतरसः।

कर्षं रसाद्गन्धकतस्तथैव विमर्द्य खल्वेऽभ्रकमेव तावत्।
दद्यात्तथा ताप्यमयोरजश्च गव्येन चाज्येन विमृश्य किञ्चित् ५
पात्रे मन्दं वह्निना ज्वालयेत्तद्दद्यान्मात्रां रक्तिकैकप्रवृद्ध्या।
यावन्माषो नाधिकं मानवेभ्यः कृत्वा वह्नेर्दीपनं हन्ति रोगान् ६
पाण्डुप्लीहोन्माददुर्नाममेहान् पित्तं साम्लं सातिसारं ज्वरं च।
सद्यः शूलान् त्वग्ग्रहण्यामयं च तथैव रोगान् खलु सूतिकायाः ७
अयं हि पञ्चामृतनामधेयो रसेन्द्रराजः क्षयरोगहारी।
वातास्रमुग्रं श्वयथुं च हन्यात्स्वयोगयुक्तः सकलान्विकारान् ८

पञ्चसमं चूर्णम्।

पथ्यानागरजीरकाख्यरुचकैः श्यामान्वितैः पञ्चभि-
श्चूर्णं पञ्चसमं समस्तरुजहृत्कायाग्निसंदीपनम्।
प्राणोत्साहविवर्धनं रुचिकरं गुल्मघ्नप्लीहापहं
प्रत्याध्मानगरादिशमनं सामानिले पूजितम् ॥ ९ ॥

छर्द्यां बदराद्यं चूर्णम्।

बदरत्रिफलानां च व्योषस्य च पलद्वयम्।
कर्पूरकर्षो लाजानां पलद्वादशकं भवेत् ॥ १० ॥
एलात्वक्पत्रकाणां तु पलं स्याद्वंशरोचना।
पलाष्टका, वेतसाम्लश्चतुष्पलमुदाहृतः ॥ ११ ॥
चूर्णं द्विगुणखण्डं तु हृद्यं वमिहरं परम्।
यक्ष्माणं रक्तपित्तं च ज्वरं कासं च नाशयेत् ॥ १२ ॥

उदरे नवक्षारकं चूर्णम्।

तुवरीटङ्कणव्योषसामुद्रं सैन्धवं बिडम्।
काचं सौवर्चलं चव्यं क्षारश्चेक्षुरकोद्भवः ॥ १३ ॥

एतानि समभागानि चूर्णीकृत्य प्रयोजयेत् ।
रक्तवातारुचिप्लीहोदररोगापनुत्तये ॥ १४ ॥

मन्दाग्नावजमोदाद्यं चूर्णम् ।

साजमोदलवणा हरीतकी शृङ्गवेरसहिता च पिप्पली ।
मद्येन तक्रेण तथोष्णवारिणा चूर्णपानमुदराग्निदीपनम् ॥१५॥

दन्तरोगे जातीपत्राद्यं चूर्णम् ।

जातीपत्रपुनर्नवातिलकणाकोरण्टपुष्पं वचा ।
शुण्ठीदीप्यकपथ्यकाः समधृतं चूर्णं मुखे धारयेत् ॥
वातघ्नं कफनाशनं कृमिहरं दुर्गन्धिनिर्नाशनं
शूलं शोफहरं च रक्तशमनं दतांश्च वज्रायते ॥ १६ ॥

कासे जातीफलाद्यं चूर्णम् ।

जातीफलं विडङ्गं च चित्रकस्तगरस्तिलाः ।
तालीसं चन्दनं शुण्ठी लवङ्गं चोपकुञ्चिका ॥ १७ ॥
कर्पूरं चाभया धात्री मरिचं पिप्पली शुभा ।
एषामक्षसमान् भागान् चातुर्जातकसंयुतान् ॥ १८ ॥
पलानि त्रीणि भृङ्गायाः शर्करा समयोजिता ।
एतच्चूर्णं तु मधुना कर्षार्धं लेहयेत्तथा ॥ १९ ॥
जयेत्कासं क्षयं श्वासं ग्रहणीमग्निमार्दवम् ।
वातश्लेष्मोद्भवांश्चान्यान् प्रतिश्यायमरोचकम् ॥ २० ॥
एताः सर्वा रुजो हन्ति वृक्षमिन्द्राशनिर्यथा ।

दाडिमाद्यं चूर्णम् ।

दाडिमस्य पलान्यष्टौ शृङ्गवेरपलत्रयम् ॥ २१ ॥
पलद्वयं पिप्पली च कोलचूर्णं पलद्वयम् ।
यवानी चाजमोदा च मिशिश्चैवाम्लवेतसम् ॥ २२ ॥
वृक्षाम्लं चविका चात्र अभया च पलोन्मिता ।
सौवर्चलं धान्यकं च सूक्ष्मैला त्वक्तथैव च ॥ २३ ॥

ग्रन्थिकं मरिचं चात्र पत्रकं सतुगाद्वयम् ।
एषामर्धपलान् भागान् सर्वैस्तुल्या सिता भवेत् ॥ २४ ॥
एतत्प्राक् भोजनाच्चूर्णं दीपनं गुल्मनाशनम् ।
अर्शांसि ग्रहणीदोषमतीसारं प्रवाहिकाम् ।
पार्श्वशूलमथानाहं प्रमेहांश्च प्रणाशयेत् ॥ २५ ॥

मन्दाग्नावामलक्यादिचूर्णम् ।

आमलकवह्निपथ्यामागधिकासैन्धवैः कृतं चूर्णम् ।
विनिहन्ति कण्ठरोगं मन्दाग्निं रक्तपित्तमपि ॥ २६ ॥

स्त्रीरोगे मेथिकाद्यं चूर्णम् ।

मेथिका शतपुष्पा च यवानी मधुयष्टिका ।
त्रिकटु त्रिफला मुस्ता त्रिजातं च पुनर्नवा ॥ २७ ॥
ऋष्यप्रोक्ता समङ्गा च चन्दनं रक्तचन्दनम् ।
द्राक्षापुष्करमञ्जिष्ठाः समं चूर्णं प्रकल्पयेत् ॥ २८ ॥
घृतखण्डेन पक्तव्यं काले स्त्रीणां च दापयेत् ।
वन्ध्यानां गर्भजननं स्त्रीणां बलविवर्धनम् ॥ २९ ॥
रक्तवातप्रशमनं पित्तोपद्रवनाशनम् ।
त्रिदोषे रुद्धगर्भे च परमं सुखकारकम् ॥ ३० ॥

कामवृद्धौ राजयोगः ।

अहिफेनं वत्सनागः केशरं चव्यचित्रकम् ।
धत्तूरभृङ्गशिग्रूणां बीजानि सितजीरकम् ॥ ३१ ॥
कपिकच्छुश्चाश्वगन्धा कलिङ्गकलवङ्गकम् ।
अजमोदार्ककरभो मुशली च शतावरी ॥ ३२ ॥
पिप्पली पिप्पलीमूलं चातुर्जातकसंयुतम् ।
कटाहे मधुना पक्त्वा कुर्यात्पूगोपमा वटीः ॥ ३३ ॥
भोजनानन्तरं वक्त्रे गुटी धार्या वटीद्वयम् ।
जातीपत्री विशेषेण धारणीया मुखे सदा ॥ ३४ ॥

क्षाराम्लदधिवर्ज्जं च कार्यं भोजनमुत्तमम् ।
षण्ढत्वं स्वल्पवीर्यत्वं हन्याच्छीतमिवानलः ॥ ३५ ॥
अतिसारे प्रमेहे च मन्दाग्नौ राजयक्ष्मणि ।
आमवाते पाण्डुरोगे महावाते शिरोगदे ॥ ३६ ॥
प्लीह्नि पानीयजे रोगे सर्वाङ्गवात इष्यते ।
ईश्वरेण भगवता कार्तिकेयाय सुन्दरः ॥ ३७ ॥
एष द्वात्रिंशको नाम योगराजः प्रकीर्तितः ।

क्षये आभाद्यं चूर्णम् ।

आभा च धातुमाक्षीकं गिरिजं च त्रिजातकम् ॥ ३८ ॥
जीवर्षभकौ मेदा काकोली पुण्डरीयकम् ।
व्योषं च वालकं चैव पृथ्वी कालेयकं बिडम् ॥ ३९ ॥
एतानि समभागानि आयसं द्विगुणं क्षिपेत् ।
शर्करा च समा देया मधुना सह लेहयेत् ॥ ४० ॥
क्षयमेकादशाकारं श्वासं कासं तथैव च ।
स्वरभेदं पार्श्वशूलं ज्वरं कम्पं च दारुणम् ॥ ४१ ॥
रक्तनिष्ठीवनं तृष्णां पीनसं च हनुग्रहम् ।
हिध्मां च कण्ठरोगांश्च नाशयेन्नात्र संशयः ॥ ४२ ॥

पिप्पल्याद्यं चूर्णम् ।

चत्वारि पिप्पलीनां तु पञ्च सौवर्चलोद्भवाः ।
जीरकस्य त्रयो भागाः शुण्ठ्या भागत्रयं तथा ॥ ४३ ॥
सप्त सप्त स्मृता भागास्तीक्ष्णदाडिमसारयोः ।
द्वौ भागौ तिन्तिडीकस्य चत्वारश्चाम्लवेतसात् ॥ ४४ ॥
षड्भागाः सैन्धवस्योक्तास्तथाऽर्धो हिङ्गुतः स्मृतः ।
निस्तुषानां विडङ्गानामेको भागः प्रकीर्तितः ॥ ४५ ॥
तत्सर्वमेकतः कृत्वा सूक्ष्मचूर्णं तु कारयेत् ।
लवणं दीपनमिदं वातश्लेष्मविकारनुत् ।
रुच्यमन्नेन संयुक्तं केवलं वा हितं तथा ॥ ४६ ॥

मन्दाग्नौ रुचकाद्यं चूर्णम्।

रुचकमरिचशुण्ठीजीरकैर्भागवृद्धै-
बिडलवणविभागः सैन्धवं चापि सार्धम्।
कफपवनविकारे शस्यते वातगुल्मे
जनयति जठराग्निं भोजने चेत्सतक्रम् ॥ ४७ ॥

मन्दाग्नौ सिंहचूर्णम्।

अर्धं हिङ्गुपलं पलं सुविमलं सौवर्चलं द्वे पले
प्रत्येकं मरिचाम्लदीप्यलवणाम्भोराशिजातान् क्षिपेत्।
शुण्ठ्याश्च त्रिपलं चतुष्पलमपि स्याद्दाडिमं जीरकं
श्रीमत्सिंहणभूमिपालकथितं सेव्यं सदेदं बुधैः ॥ ४८ ॥

अर्शसि सूरणाद्यं चूर्णम्।

सूरणं दहनं क्षारो मरिचं नागरं क्रमात्।
अर्धाधिकमिदं चूर्णं क्षाराम्लार्द्रकभावितम् ॥ ४९ ॥
हन्यादर्शांसि शूलं च गुल्मप्लीहोदरक्रमीन्।
भुक्तं भुक्तं पचत्याशु शान्तमग्निं च दीपयेत् ॥ ५० ॥

वातरोगे हरीतकीयोगः।

धान्यकाञ्जिकयुता हरीतकी हिङ्गुसैन्धवकणासुपूरिता।
भक्षिता भवति वातरोगहा हन्त्यजीर्णमथ च क्षुधाकरी ॥५१॥

विद्रधौ भूनिम्बाद्यं चूर्णम्।

भूनिम्बार्धपलं निशापलयुतं दार्व्याः पले द्वे तथा
दार्व्यर्धेन पुनर्नवां कुरु समां दार्वीसमः प्रग्रहः।
सार्धं दुःस्पर्शया तु कटुका योज्या तदर्धेन वै
अश्माह्वं निशया समानममृता पादाधिकं स्यात्पलम् ॥५२॥
एतद्वत्सकसप्तकर्षसहितं सुश्लक्ष्णचूर्णीकृतं
वासायाः स्वरसेन भावितमिदं त्रीन् सप्त वा वासरान्।
भूयस्तद्गुडवारिणा प्रमुदितं पेयं पुरःस्थे रवौ
एतद्विद्रधिरोगिणां विजयकृत् चूर्णं तु गुह्योत्तमम् ॥ ५३ ॥

ज्वरे किराततिक्ताद्यं चूर्णम् ।

किराततिक्तं त्रिफलापटोलं तिक्तेन्द्रबीजं सुरदारु दार्वी ।
व्योषं शठीचन्दनयुग्मनिम्बं दुरालभाचन्दनपद्मकं च ॥ ५४ ॥
पुनर्नवोशीरविषागुडूचीत्रायन्तिकापिप्पलिमूलतुल्यम् ।
चूर्णं विलिह्यान्मधुनाऽथ वारिणा तथाऽनुपानं त्वमृतारसेन ५५
ज्वरं पुराणं विनिहन्ति शीघ्रं तृतीयकं वा वमिदाहयुक्तम् ।
चातुर्थकं चास्यगतांश्च रोगान् सपीनसं कामलमाशु हन्ति ५६

कासे दुरालभाद्यं चूर्णम् ।

दुरालभां शृङ्गवेरं शठीं द्राक्षां सितोपलाम् ।
लिह्यात्कर्कटशृङ्गीं च कासे तैलेन वातजे ॥ ५७ ॥

ग्रहण्यां पिप्पलीमूलाद्यं चूर्णम् ।

समूला पिप्पली क्षारौ द्वौ पञ्चलवणानि च ।
मातुलुङ्गाभयारास्नाशठीमरिचनागरम् ॥ ५८ ॥
कृत्वा समांशं तच्चूर्णं पिबेत्प्रातः सुखाम्बुना ।
श्लेष्मके ग्रहणीदोषे बलवर्णाग्निवर्धनम् ॥ ५९ ॥

ग्रहण्यां कुठेरकाद्यं चूर्णम् ।

कुठेरकश्चामलकी यवानी फलत्रिकं चैव कटुत्रिकं च ।
वृन्ताकगण्डीरवृषं सनिम्बं कुष्ठं तथा चेन्द्रयवा विडङ्गम् ६०
बीजानि दद्यान्निचुलस्य दार्वी दुरालभा तिक्तकरोहिणी च ।
दुर्वोग्रगन्धाऽतिविषा गुडूची किराततिक्तं गजपिप्पली च ६१
सर्वाण्युपाहृत्य तु चूर्णमेषां भागांशयुक्तं लवणं द्विरंशम् ।
अयोरजः स्यात्त्रिगुणं च युक्तं फलत्रिकं स्याच्चतुरंशयुक्तम् ६२
चूर्णीकृतं तद्धृतभाजनस्थं पिबेच्च मद्येन सुखोदकेन ।
चूर्णं यथासात्म्यबलानुरूपं प्लीहाग्निसादारुचिपार्श्वशूलम् ॥ ६३ ॥
प्रमेहकुष्ठानथ पाण्डुरोगं हृद्रोगगुल्मं विषमज्वरं च ।
भगन्दरं श्वासगदांश्च हन्यात् सुदुस्तरान् वातकफोद्भवांस्तु ।
एतद्धि चूर्णं बलमांसकारि ओजस्करं रोगगणापहारि ॥ ६४ ॥

शोफे अयोरजश्चूर्णम्

त्रिफलायास्तु कुडवं पिप्पलीकुडवं तथा ।
विडङ्गमरिचाभ्यां तु द्वे पले च समावपेत् ॥ ६५ ॥
पलं पलं तु कुर्वीत दन्तीचित्रकयोरपि ।
गुडूचीपिप्पलीमूलकुष्ठानां च पलं पलम् ॥ ६६ ॥
शृङ्गवेरपले द्वे तु पञ्च चव्यात्पलानि च ।
शेषाण्यर्धपलीकानि यानि वक्ष्यामि तत्वतः ॥ ६७ ॥
रास्ना स्थिरा गोक्षुरकं मधुकं देवदारु च ।
वचा चातिविषा चैव मुस्तकं कटुरोहिणी ॥ ६८ ॥
कट्फलं सारिवे द्वे च श्यामा भल्लातकानि च ।
पुनर्नवा तेजवती त्वचं पत्रं शतावरी ॥ ६९ ॥
निदिग्धिका व्याघ्रनखं मञ्जिष्ठा कूटशाल्मली ।
निचुलं त्रिवृता भार्गी कुटजस्य फलं त्वचम् ॥ ७० ॥
एतदौषधसंभारं सूक्ष्मचूर्णं तु कारयेत् ।
यावन्त्येतानि चूर्णानि द्विस्तावत्स्यादयोरजः ॥ ७१ ॥
तदेकत्र कृतं शोफी लेहयेन्मधुसर्पिषा ।
क्षीरं चानुपिबेद्युक्त्या निरन्नक्षीरसेवनः ॥ ७२ ॥
अयोरजसमित्येतत्ख्यातं सिद्धं रसायनम् ।
संवत्सरप्रयोगेण शतवर्षं च जीवति ॥ ७३ ॥
निहन्ति श्वयथुं चोग्रं वृक्षमिन्द्राशनिर्यथा ।
अर्शांसि पाण्डुरोगं च मन्दाग्निं कृमिकोष्ठताम् ॥ ७४ ॥
भगन्दरं च पामां च कुष्ठानि किटिभानि च ।
यस्मिन् यस्मिन् विकारे हि युज्यते त्वयसो रजः ।
तं तं निहन्ति वै रोगं देवारीन् केशवो यथा ॥ ७५ ॥

पाण्डुरोगे नवायसं चूर्णम् ।

किराततिक्तं सुरदारु दार्वी मुस्ता गुडूची कटुका पटोलम् ।
दुरालभा पर्पटकं सनिम्बं कटुत्रिकं वह्निफलत्रिकं च ॥ ७६ ॥

विडङ्गकं चैव समांशकानि सर्वैः समं चूर्णमथापि लौहम् ।
सर्पिर्मधुभ्यां गुटिका विधेयाः सेव्या सदा वै बदरप्रमाणाः॥७७
निहन्ति पाण्डुं श्वयथुं प्रमेहं हलीमकं संग्रहणीप्रदोषम् ।
श्वासं च कासं च सरक्तपित्तमर्शांसि चोर्वोर्ग्रहमामवातम् ॥७८

प्रवाहिकायां कुटजाद्यं चूर्णम् ।

कुटजत्वगिन्द्रयवान् पाठां मुस्तं रसाञ्जनं शुण्ठीम् ।
बालं बिल्वमतिविषां कटुकं वै धातकीं समाहृत्य ॥ ७९ ॥
मधुनाऽऽलोड्य निपीतं तण्डुलपयसा प्रवाहिकां हरति ।
अर्शांसि गुदे शूलं पित्तरक्तातिसारं च ॥ ८० ॥

गुल्मे समशर्करं चूर्णम् ।

त्रिवृत्तुल्यार्धकर्षाणि हिङ्गुसौवर्चलत्वचः ।
श्रेष्ठाम्लवेतसव्योषं सर्वैस्तुल्या तु शर्करा ॥ ८१ ॥
समकं नाम तच्चूर्णं पिबेदुष्णेन वारिणा ।
गुल्मान् पञ्च सहृद्रोगान् कुक्षिशूलं च नाशयेत् ॥ ८२ ॥

शोषे तिलाद्यं चूर्णम् ।

तिलकर्केन्धुलाजानां चूर्णं मध्वाज्यसंयुतम् ।
क्षीरानुपानं मासेन शोषघ्नं नास्त्यतः परम् ॥ ८३ ॥

मन्दाग्नौ आमलकादिचूर्णम् ।

धात्री भागैकयुक्तं च पथ्या भागत्रयं तथा ।
कणाभागत्रयं चैव द्वौ भागौ चित्रकस्य च ॥ ८४ ॥
भागैकं सैन्धवस्यैतच्चूर्णमामलकादिकम् ।
क्षुधाकरमिदं चूर्णं मन्दाग्निं विनिवारयेत् ॥ ८५ ॥

मन्दाग्नौ सौवर्चलाद्यं चूर्णम् ।

सौवर्चलं कणा शुण्ठी रामठं जीरकद्वयम् ।
अजमोदा च मरिचमम्लवेतसमेव च ॥ ८६ ॥
समभागमिदं चूर्णं मन्दाग्निविनिवारणम् ।

मन्दाग्नौ अग्निचूर्णम्।

सौवर्चलं सैन्धवं च विडं क्षारः समांशकम् ॥ ८७ ॥
द्विगुणा च कणा शुण्ठी जीरकं षड्गुणं तथा।
अग्निचूर्णकमेतच्च वातमन्दाग्निवारणम् ॥ ८८ ॥

मन्दाग्नौ सिंहणचूर्णम्।

सौवर्चलं सैन्धवं च सामुद्रं मरिचं तथा।
दाडिमसारकं चाम्लवेतसं समभागकम् ॥ ८९ ॥
नागरं त्रिगुणं चैव जीरकं च चतुर्गुणम्।
सिंहणं चूर्णमेतच्च मन्दाग्निविनिवारणम् ॥ ९० ॥

इति श्रीवैद्यसोढलग्रथिते गदनिग्रहे परिशिष्टे
चूर्णाधिकारस्तृतीयः।

---

## अथातो परिशिष्टो गुटिकाधिकारश्चतुर्थः।

क्षतक्षीणे सर्पिर्गुटिका।

त्वक्क्षीरीश्रावणीद्राक्षामूर्वर्षभकजीवकैः।
वीरर्धिक्षीरकाकोलीबृहतीकपिकच्छुभिः ॥ १ ॥
खर्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः।
धात्रीविदारीक्षुरसप्रस्थैः प्रस्थं घृतात्पचेत् ॥ २ ॥
शर्कराऽष्टपलं शीते क्षौद्रार्धप्रस्थमेव च।
दत्त्वा सर्पिर्गुडान् कुर्यात्कासहिक्काज्वरापहान् ॥ ३ ॥
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम्।
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलम् ॥ ४ ॥

क्षतक्षीणे क्षीरादिलेहगुटिका।

नीत्वा विदारिस्वरसं चतुःपलमिदं भिषक्।
प्रस्थं तित्तिरिमांसस्य रसात् प्रस्थं घृतस्य च ॥ ५ ॥
प्रस्थद्वयं गवां क्षीरं रसादिक्षोस्तथाऽऽढकम्।
पाकार्थं प्रक्षिपेद्भाण्डे तत्र कल्कमिमं क्षिपेत् ॥ ६ ॥

जीवन्ती चैव काकोल्यौ द्वे मेदे मधुकं तथा ।
जीवकर्षभकौ मुद्गमाषपर्ण्यौ प्रमाणतः ॥ ७ ॥
प्रत्येकं तत्पलार्धं स्यात्पियालस्य चतुःपलम् ।
चतुःपलं मधूकानां द्विपला वंशलोचना ॥ ८ ॥
मधुयष्ट्या भवेत् कर्षो अक्षमज्जापलं तथा ।
कणापलं च खर्जूरं पलानां विंशतिः स्मृतम् ॥ ९ ॥
कल्कं संपेषयेदिक्षो रसैः पूर्वद्रवे क्षिपेत् ।
मन्दाग्निपाचनाल्लेहीभूते शीते क्षिपेत्सिताम् ॥ १० ॥
विंशत्पलप्रमाणां तु मधुनोऽष्टपलं तथा ।
अजाजीमरिचानां तु पलमेकं नियोजयेत् ॥ ११ ॥
क्षीरादिलेहगुटिका कासहिक्काज्वरापहा ।
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ॥ १२ ॥
शुक्रनिद्राक्षयं तृष्णां हन्यात्कार्श्यं सकामलम् ।

प्रभावतीवटिका ।

हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ॥ १३ ॥
भद्रमुस्ता विडङ्गानि सप्तमं विश्वभेषजम् ।
सैन्धवं चित्रकं चैव कुष्ठं पाठा हरीतकी ॥ १४ ॥
एतानि समभागानि छागमूत्रेण पेषयेत् ।
कोलास्थिका गुटी छायाशुष्का नाम्ना प्रभावती ॥ १५ ॥

अग्निमुखवटी ।

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत् ।
त्रयो भागा विडङ्गानां सैन्धवं च चतुर्गुणम् ॥ १६ ॥
अजाज्याः पञ्चभागाश्च षड्भागाश्चैव नागरात् ।
मरिचस्य सप्त भागाः पिप्पली चाष्टभागिका ॥ १७ ॥
कुष्ठं नवगुणं प्रोक्तं दशभागा हरीतकी ।
एकादश तथा वह्नेर्भागा द्वादश दीप्यकात् ॥ १८ ॥

गुडेन द्विगुणेनैव गुटिकां कारयेद्बुधः ।
ततो वातरुजार्तानां नित्यमेव प्रयोजयेत् ॥ १९ ॥

श्वासादौ सूर्यचन्द्रप्रभागुटिका ।

त्रिकत्रयं हरिद्रे द्वे तिक्ता तिक्तं शठी वचा ।
वेल्लचित्रकतालीसभार्गीपद्मकजीरकम् ॥ २० ॥
द्वौ क्षारौ पिप्पलीमूलं पटूनि त्रीणि तुम्बरु ।
देवदारु वचा चव्यं धान्यकं गजपिप्पली ।
वत्सकातिविषादन्तीश्यामापुष्करकामृताः ॥ २१ ॥
भागोऽमीषां सूक्ष्मचूर्णीकृतानां
भागश्चार्धस्तापितरोद्भवस्य ।
तद्वद्दंश्या, भागवृध्या परे स्यु-
रभ्रं लोहं शैलजं कौशिकश्च ॥ २२ ॥
संमर्द्य गुटिका कार्या सूर्यचन्द्रप्रभाभिधा ।
पूर्वाह्णे तां प्रयुञ्जीत माक्षिकेण परिप्लुताम् ॥ २३ ॥
अनुपाने प्रयुञ्जीत तक्रं मधु रसोत्तमम् ।
क्षीरं बदरतोयं वा शर्करामिश्रितं जलम् ॥ २४ ॥
घृतं मूत्रं तथा चाम्लस्वादुदाडिमजं रसम् ।
कासं श्वासं तथा शोषमरुचिं पार्श्ववेदनाम् ॥ २५ ॥
अर्शांसि कामलां मेहं पाण्डुरोगं हलीमकम् ।
हृद्रोगं मूत्रकृच्छ्रं च श्वयथुं ग्रहणीगदम् ॥ २६ ॥
यकृत्प्लीहाभिवृद्धिं च कृमिं ग्रन्थिं भगन्दरम् ।
श्लीपदं गण्डमालां च व्रणान्नाडीव्रणानपि ॥ २७ ॥
अतिस्थौल्यातिकार्श्यं च विद्रधीन्पिटिकामपि ।
नासानेत्राश्रितान्रोगान् शिरोरोगान् सुदारुणान् ॥ २८ ॥
मुखरोगानशेषांश्च रक्तपित्तं स्वरक्षयम् ।
ज्वरं च सन्निपातोत्थं विषमं चापि पैत्तिकम् ॥ २९ ॥

विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान् ।
निजानृतुभवांश्चैव ये चान्ये नात्र कीर्तिताः ।
तान् तान् प्रशमयत्येषा वृक्षमिन्द्राशनिर्यथा ॥ ३० ॥

मेधां स्मृतिं कान्तिमनामयत्व-
मायुःप्रकर्षं पवनानुलोम्यम् ।
स्त्रीषु प्रहर्षं बलमिन्द्रियाणा-
मग्नेश्च कुर्याद्विधिनोपयुक्ता ॥ ३१ ॥

अतीसारे विशल्या गुटिका ।

फलत्रयं त्र्यूषणजीरकं च
कुबेरसंज्ञं पलमात्रमेतत् ।
पलद्वयं नूतनधूर्तपत्न्याः
कर्षैककं चैव विषस्य योज्यम् ॥ ३२ ॥
पलार्धमात्रं करभस्य चूर्णं
ततः समेनैव गुडेन योज्यम् ।
गुटी निबद्धा चणकप्रमाणा
नियोजनीया हि सदातिसारे ॥ ३३ ॥
चतुर्विधाजीर्णभयापहन्त्री
इयं विशल्या गुटिकेति नाम्ना ॥ ३४ ॥

त्रोटहरी गुटिका ।

शुण्ठीसक्तुपुनर्नवात्रिफलिकासैरेयशेफालिका-
मुस्तावासकनिम्बपत्रकटुकाबोलाश्वगन्धावचाः ।
व्योषच्छिन्नरुहाविडङ्गसहिताः सर्वाः समांशा बुधै-
र्विंशांशा च महौषधी परिमिता, खण्डस्य विंशांशकाः॥३५॥
तत्तुल्येन च गोघृतेन मधुना सर्वं च संमर्दितं
बद्धा तेन शिवाप्रमाणगुटिका श्लेष्माणमुग्रं जयेत् ।

क्षीणस्यानिलजानि हन्ति सहसा सर्वप्रमेहांस्तथा
नाम्ना त्रोटहरी गुटी च विजया लोके च या विश्रुता ॥३६॥

कासे चन्द्रप्रिया गुटिका ।

चन्द्रप्रिया लोमशगन्धवत्यौ कटुत्रिकं तिक्तकरोहिणी च ।
भूनिम्बभार्ग्यौ गिरिमल्लिका च समानभागं खलु सर्वद्रव्यम् ।
वासारसेनाथ गुटी विधेया सुदुस्तरं चाशु निहन्ति कासम् ॥३७

मुखरोगे खादिरगुटी ।

जातीफलैलादलकुङ्कुमानि
लवङ्गकङ्कोलकपुष्कराणि ।
वराङ्गकर्चूरयुतान्यमूनि
समानि भागानि निशाकरस्य ॥ ३८ ॥
भागद्वयं स्यान्मृगनाभिजायाः
सपूतिकायाः खलु तुर्यभागः ।
षष्टिर्विभागाः खदिरस्य सारात्
भागत्रयं तत्र वरस्य दद्यात् ॥ ३९ ॥
एकीकृतं घृष्टसुचन्दनेन
सुकामिनीहस्ततलैः प्रमर्द्य ।
सुवासितं पुष्पचयैः सुगन्धै-
र्वटी कृता स्यान्मुखरोगहन्त्री ॥ ४० ॥
स्त्रीणां प्रमोदं विपुलं ददाति
मुखं सुगन्धं विशदं करोति ।
युवातिरेताः सुभगो जनानां
प्राणप्रियः स्यादतिकामिनीनाम् ॥ ४१ ॥
कण्ठं विपञ्चीनिनदेन तुल्यं
करोत्यसौ खादिरसंज्ञका वटी ॥ ४२ ॥

मुखरोगे द्वितीया खदिरगुटिका ।

पद्माह्ववक्रागुरुकुङ्कुमैश्च
तुल्यांशकैः श्लक्ष्णशिलाविपिष्टैः ।
सर्वैः समः स्यात्खदिरस्य सारः
सारङ्गदर्पस्फटिकाधिवासिताः ॥ ४३ ॥
वल्लप्रमाणा गुटिका विधेया-
स्ताः सेविता घ्नन्ति कफप्रमेहम् ।
हिक्काग्निसादारुचिपीनसांश्च
रोगानशेषान् खलु चास्य जातान् ॥ ४४ ॥
सूताभ्रहेमसहितां पूर्वोक्तां भक्षयेत्प्रातः ।
नाम्ना खादिरवटिका कथितेयं सिंहगुप्तेन ॥ ४५ ॥

वातरोगे त्वगाद्या गुटिका ।

त्वगेला गन्धकश्चैव गुग्गुलुः समभागतः ।
कुर्याद्वातारितैलेन गुटिका वातरोगिणाम् ॥ ४६ ॥

रसायनार्थे विजयागुटिका ।

पलत्रयं हरीतक्याश्चित्रकस्य तथैव तु ।
एलात्वक्पत्रमुस्तानां भागोऽर्धपलिकः स्मृतः ॥ ४७ ॥
व्योषं पिप्पलिमूलं च विषं च पलमात्रकम् ।
नागकेसरचूर्णं तु कर्षं दद्याद्विचक्षणः ॥ ४८ ॥
रेणुकार्धपलं चात्र रसस्य कर्षमेव च ।
एतत्संभृत्य संभारं सूक्ष्मचूर्णं तु कारयेत् ॥ ४९ ॥
गुडस्यार्धतुलां दत्त्वा दर्व्या सम्यग्विघट्टयेत् ।
ततस्तु गुटिकाः कृत्वा तस्मात्षष्टिशतत्रयम् ॥ ५० ॥
एकैकां भक्षयेत्प्रातः कृताहारो यथाबलम् ।
मासेन पलितं हन्ति करोत्यग्निं द्वितीयकम् ॥ ५१ ॥

शुक्रवृद्धिं तृतीये तु बलवर्णप्रसादनम् ।
हन्त्यष्टादश कुष्ठानि सप्त चैव महाक्षयान् ॥ ५२ ॥
प्लीहानं श्वासकासौ च अन्त्रवृद्धिमरोचकम् ।
अशीतिं वातजान्रोगान्मूत्रकृच्छ्रं भगन्दरम् ॥ ५३ ॥
प्रमेहान्विंशतिं चैव तथाऽर्शांसि गलग्रहम् ।
सर्पलूताविषं हन्ति सर्वं स्थावरजङ्गमम् ॥ ५४ ॥
योनिदोषमपस्मारमुन्मादं विषमज्वरम् ।
बलेन गजतुल्योऽसौ वेगेन तुरगोपमः ॥ ५५ ॥
मायूरस्तु भवेदग्निर्वाराहश्चोत्र एव च ।
चटकः स्त्रीविलासेन गृध्रदृष्टिश्च जायते ॥ ५६ ॥
उपयोगात्परं जीवेन्नरो वर्षशतत्रयम् ।
न चान्ने परिहारोऽस्ति न चाध्वनि न मैथुने ॥ ५७ ॥
ग्राम्यधर्मं च कुर्वाणो भोजनं च यथेच्छया ।
विजया नाम गुटिका विख्याता रुद्रभाषिता ।
भक्षयन्ति नरा ये तु तेषां सिद्धिर्न संशयः ॥ ५८ ॥

वातरोगे योगोत्तमा गुटिका ।

त्र्यूषणं त्रिफला क्षारौ लवणान्यथ चित्रकम् ।
तालीसं चविकं शृङ्गी निशे द्वे गजपिप्पली ॥ ५९ ॥
एला त्वचं विडङ्गानि पौष्करं नागकेसरम् ।
तार्क्ष्यकं दीप्यको मुस्ता समभागानि कारयेत् ॥ ६० ॥
यावन्त्येतानि द्रव्याणि तावन्मात्रमयोरजः ।
तावच्छिलाजतुर्देयः सर्वैस्तुल्यस्तु गुग्गुलुः ॥ ६१ ॥
संकुट्य गुटिकां कुर्यादक्षमात्रप्रमाणतः ।
खादेन्ना मधुना युक्त्या तोयक्षीररसाशनः ॥ ६२ ॥
निर्यन्त्रितं सदा भोज्यं सर्वर्तुषु निरत्ययम् ।
अशीतिं वातजान्रोगांश्चत्वारिंशच्च पैत्तिकान् ॥ ६३ ॥

विंशतिं श्लैष्मिकांश्चैव प्रमेहांश्चैव विंशतिम् ।
उदराणि तथा चाष्टौ श्वयथुं पवनात्मकम् ॥ ६४ ॥
विंशतिं मूत्रकृच्छ्राणि दुष्टनाडीव्रणानि च ।
हन्त्यष्टादश कुष्ठानि सप्त चैव महाक्षयान् ॥ ६५ ॥
कासं श्वासं तथा हिक्कां हृच्छूलं छर्द्यरोचकम् ।
गुल्मांश्च पाण्डुरोगं च जयेत्पञ्च प्रकारजम् ॥ ६६ ॥
चत्वारो ग्रहणीदोषाः षडर्शांसि तथैव च ।
सर्वांस्तान्नाशयत्याशु तमः सूर्योदयो यथा ॥ ६७ ॥
तथाऽर्बुदं गण्डमालां विद्रधिं सभगन्दरम् ।
हरते सर्वरोगांश्च वृक्षमिन्द्राशनिर्यथा ।
योगोत्तमेति विख्याता गुटिका वैद्यपूजिता ॥ ६८ ॥

प्रमेहे कर्पूरादिगुटिका ।

कर्पूरशृङ्गीमनुमत्तबीजं जातीफलं लोहमृताभ्रकं च ।
रसोऽथ गन्धं त्रपु नागशुल्बे एला विषं धान्यकटुत्रिकं च ॥६९
तालीसपत्रं त्वथ नागपुष्पं तमालपत्रं कपिकच्छुबीजम् ।
सत्त्वंगुडूच्याः क्षुरकस्य बीजं वटी विधेया सितया समेता ॥७०॥
वातप्रमेहं सकफं सपित्तं श्वासं च कासं बहुसन्निपातान्
बलं च हीनं स्वरभङ्गजाड्यं निहन्ति कामं खलु दीपयत्यपि ॥७१

गुल्मे गुडवटकाः ।

गुडविश्वौषधपथ्यामागधिकादाडिमैः कृता गुटिकाः ।
विनिहन्ति भक्ष्यमाणा गुल्मार्शोवह्निसादगदान् ॥ ७२ ॥

पाण्डुरोगे क्षारवटकाः ।

शृङ्गबेरविडङ्गानि पिप्पली मरिचानि च ।
नीलीपत्रं पृथक्पर्णी हरिद्राद्वयमेव च ॥ ७३ ॥
मञ्जिष्ठा भद्रमुस्तं च शिग्रुबीजानि चित्रकम् ।
देवदारु वचा दन्ती त्रिफला हस्तिपिप्पली ॥ ७४ ॥

शालिपर्णी मधुरसा द्राक्षा कटुकरोहिणी ।
भल्लातकानीन्द्रयवा बृहत्यौ द्वे दुरालभा ॥ ७५ ॥
शतावरी विशल्या च पाठा भार्गी हरेणुका ।
एतानि समभागानि सर्वाण्येकत्र कारयेत् ॥ ७६ ॥
यावन्त्येतानि चूर्णानि द्विस्तावत्स्यादयोरजः ।
क्षारं च यावशूकानां ततो द्विगुणमावपेत् ॥ ७७ ॥
गोमूत्रयुक्तांस्तान्कुर्याद्वटकानक्षसंमितान् ।
खादेदेकं ततो द्वौ वा सुखं चाशु पिबेज्जलम् ॥ ७८ ॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगं भगन्दरम् ।
श्वयथुं श्वासकासौ च क्रमिदोषांश्च नाशयेत् ॥ ७९ ॥
व्याधितस्य बलं ज्ञात्वा गवां मूत्रेण दापयेत् ।
पाण्डुरोगं निहन्त्याशु ब्रह्मदण्ड इवोद्धृतम् ॥ ८० ॥
विश्रुताः क्षारवटकाः प्रयोज्याः सिद्धिमिच्छता ।
एष शङ्करणो योगो वैद्यानामर्थकृत्तथा ॥ ८१ ॥

कुष्ठे पथ्यावटकाः ।

पथ्यां सेन्द्रयवां सकिंशुकफलां सार्कां तथाऽऽवर्तकीं
व्याधिघ्नेन तु योजितां हुतभुजा सारुष्करां वाकुचीम् ।
तद्वच्च क्रिमिशत्रुणाप्युपगतामेकैकवृद्धानिमान्
गोमूत्रेण विमृद्य तुल्यतुवरान्कुष्ठी वटान्भक्षयेत् ॥ ८२ ॥
निहन्ति हतनासिकाकरजकर्णपादाङ्गुलि-
क्षरद्रुधिरपूतिपूयपरिजग्धजन्तुव्रणान् ।
प्रभिन्नचिरलक्षितस्वरमशेषकुष्ठं मह-
न्निहन्ति कुरुतेऽरुणार्कवपुषं नरं योगतः ॥ ८३ ॥

ज्वरे फलत्रिकाद्यो मोदकः ।

फलत्रिकगुडव्योषशर्करात्रिवृतादिकम् ।
मोदकं भक्षयित्वाऽनुपिबेत्कोष्णं जलं पुनः ।
पार्श्वशूलेऽरुचौ कासे ज्वरे चानिलसंभवे ॥ ८४ ॥

रसायने त्रिफलाद्या वटकाः।

त्रैफलस्य तु चूर्णस्य पलानि दश संहरेत्।
सप्त चैव विडङ्गानां लोहचूर्णं पलत्रयम् ॥ ८५ ॥
शतं भल्लातकानां च पलानि दश बाकुची।
शिलाजतु पले द्वे च गुग्गुलोस्तु पलद्वयम् ॥ ८६ ॥
पलं पुष्करमूलस्य पलार्धं फलमेव च।
ग्रन्थिकाग्नि समरिचं पिप्पल्यो विश्वभेषजम् ॥ ८७ ॥
त्वक्पत्रं कुङ्कुमं मुस्ता नागकेसरमेव च।
यष्टीमधुकरोध्रं च कार्षिकान्युपकल्पयेत् ॥ ८८ ॥
यावन्त्येतानि सर्वाणि तावत्खण्डं प्रदापयेत्।
पलिकान्वटकान्कुर्यात्सर्वव्याधिविनाशनान् ॥ ८९ ॥
एकैकं भक्षयेत्प्रातर्यथेष्टं चात्र भोजनम्।
प्लीहमर्शांस्यतीसारं वातगुल्मं भगन्दरम् ॥ ९० ॥
कुष्ठानि चैव सर्वाणि सप्तरात्राद्व्यपोहति।
एतत्सर्वं प्रयुञ्जानो जीवेद्वर्षशतत्रयम् ॥ ९१ ॥

अरुचौ लाजाद्यो मोदकः।

द्वादशाष्टचतुस्त्रिंशद्व्येकार्धार्धसमायुतैः।
लाजैस्तुगातिन्तिडीककोलव्योषत्रिजातकैः।
सचन्द्रा मोदका रुच्याः क्रमाद्द्विगुणशर्कराः ॥ ९२ ॥

त्रिफलाद्या गुटिका।

त्रिफलाबदराणां स्याद्व्योषस्य च पलद्वयम्।
कर्पूरकर्षो लाजानां पलद्वादशकं भवेत् ॥ ९३ ॥
एलात्वक्पत्रकानां तु पलं स्याद्वंशरोचना।
पलाष्टिका, वेतसश्च चतुष्पल उदाहृतः ॥ ९४ ॥
चूर्णाद्द्विगुणखण्डं स्याद्धृद्या वमिहरा परम्।
यक्ष्माणं रक्तपित्तं च ज्वरं कासं च नाशयेत् ॥ ९५ ॥

अर्शसि चित्रकगुटिका।

चित्रकस्य पलं दत्त्वा पलं चार्धं त्रिवृत्तथा।
कणाकर्षौ गुडस्याष्टौ पलानि समुपाहरेत् ॥ ९६ ॥
विंशतिश्च हरीतक्यो गुटिका दश कारयेत्।
दशमे दशमे चाह्नि त्वेकैकां भक्षयेत् सुधीः।
मण्डलानि च कण्डूंश्च अर्शांसि ग्रहणीं जयेत् ॥ ९७ ॥

प्रमेहे वामदेवेन कथिता गुटिका।

कटुत्रिकं वचा मुस्ता विडङ्गं चित्रकं विषम्।
एतानि समभागानि पथ्या च द्विगुणा विषात् ॥ ९८ ॥
पञ्चत्रिंशद्गुडाद्भागाः क्वाथयेन्मृदुनाग्निना।
बदरसमाऽत्र गुटिका कार्या, एषा गुटिका प्रमेहं, आमवातं, गुल्मं, मन्दाग्निं, हन्तिः विशेषतश्च लालामेहम् ॥

गुग्गुलुगुटिका।

गुग्गुलु कुडवादर्द्धं ककुभत्वगयोरजोविडङ्गानि।
भल्लातकगोक्षुरकौ त्रिवृता त्रिफला द्वितीयार्धम् ॥ ९९ ॥
भुक्त्वैनां गुटिकां यथेष्टचरितः षण्मासयोगात्पुमान्
सव्याधीन्सभगन्दरान्सपिटिकानर्शांसि दुष्टव्रणान्।
खालित्यं पलितं जरामपि तनोर्जित्वा प्रदीप्तानलः
सौभाग्याप्तसुखो निरामयतनुर्जीवेत्समानां शतम् ॥१००॥

शोफे लघुत्रिफलागुग्गुलुगुटिका।

गुग्गुलुस्त्रिफला कृष्णा पञ्चनेत्रत्रिभागिकाः।
गुटिकाः शोषगुल्मार्शो भगन्दरवतां हिताः ॥ १०१ ॥

वातव्याधौ पृथुत्रिफलाद्या गुग्गुलुगुटिका।

त्रिफला हपुषा मुस्तं चविका चित्रकः शठी।
यवानीग्रन्थिकव्योषसौवर्चलदुरालभाः ॥ १०२ ॥
अजमोदा विडङ्गं च दाडिमं साम्लवेतसम्।
वाष्पिका पौष्करं दारु त्वगेलापत्रकेसरम् ॥ १०३ ॥

एषामर्धपलैर्भागैः पलानि दश गुग्गुलोः।
संमिश्र्य सर्पिषा सार्धं गुटिकां कारयेद्बुधः॥ १०४॥
भक्षयित्वा ससर्पिष्कां जीर्णे च प्रमिताशनम्।
वातश्लेष्मविकारेषु नाडीदुष्टव्रणेषु च॥ १०५॥
श्लेष्मकासे च शोफे च योगमेनं प्रयोजयेत्।
जठरे योनिशूलेषु त्वन्तर्भूतं च विद्रधिम्॥ १०६॥
पार्श्वशूलं कृमीन् गुल्मान्प्रमेहान् छर्द्यरोचकौ।
केवलानिलजान्रोगानशीतिं श्लैष्मिकानपि।
विंशतिं नाशयत्याशु रसायनमनुत्तमम्॥ १०७॥

गुल्मे त्रिवृताद्या गुटिका।

त्रिवृत्पलं हिङ्गुकर्षस्त्रिक्षारस्य पलत्रयम्।
यवान्यजाजीमरिचं धान्यकं शितिवारकम्॥ १०८॥
उपकुञ्चीविडङ्गाजमोदाश्चार्धपलोन्मिताः।
पृथक्पलद्वयं दद्यादम्लवेतसजं रजः॥ १०९॥
मातुलुङ्गरसेनैषां गुटिकां कारयेद्भिषक्।
सुखाम्बुनाम्लैर्मन्थैर्वा पिबेत्क्षीरेण सर्पिषा॥ ११०॥
काङ्कायनोक्तगुटिका वातगुल्मविनाशिनी।
गोमूत्रयुक्ता कफजं पयसा पित्तसंभवम्॥ १११॥
त्रिफलारसमूत्रैस्तु निहन्यात्सान्निपातिकम्।
रक्तगुल्मे तु नारीणामुष्ट्रीदुग्धेन वा पिबेत्॥ ११२॥

कृष्णाद्या गुटिका।

कृष्णाशताह्वाशुण्ठीनां साभयानां पलं पलम्।
गुडस्य षट्पलान्येषा गुटिका भ्रमनाशिनी॥ ११३॥

इति श्रीवैद्यसोढलग्रथिते गदनिग्रहे परिशिष्टे गुटिकाधिकारश्चतुर्थः समाप्तः।

## अथ परिशिष्टे पञ्चमोऽवलेहाधिकारः ।

शोषे पिप्पल्याद्योऽवलेहः ।

कृष्णाचूर्णं क्षिपेत्प्रस्थं सिताप्रस्थद्वयं तथा ।
प्रस्थार्धं गोघृतं चैव कुडवं माक्षिकं तथा ॥ १ ॥
दुग्धाढकेनसंयुक्तं यथोक्तं विपचेद्भिषक् ।
चातुर्जातपलं चैकं चूर्णमेतद्विनिक्षिपेत् ॥ २ ॥
प्रत्यूषे भक्षयेन्नित्यं ततः कार्यं समाचरेत् ।
हन्त्यष्टादश कुष्ठानि क्षयमेकादशात्मकम् ॥ ३ ॥
पञ्चकासान् तथा श्वासान् पाण्डुं प्लीहमपस्मृतिम् ।
मूत्रकृच्छ्रं तथा रक्तं शुक्रदोषं तथा जराम् ॥ ४ ॥
धातुक्षयं च मन्दाग्निं व्याधिं परमदुस्तरम् ।
सर्वांस्तान्नाशयत्याशु तमः सूर्योदयो यथा ॥ ५ ॥
सुभगो दर्शनीयश्च स गच्छेत्प्रमदाशतम् ।
रसायनमिदं श्रेष्ठमश्विभ्यां परिकीर्तितम् ॥ ६ ॥

शोषे द्वितीयो पिप्पल्याद्यवलेहः ।

प्रस्थं पिप्पलीमादाय क्षीरं चैव चतुर्गुणम् ।
अर्धाढकं घृतं गव्यं शुद्धखण्डात्तथाऽऽढकम् ॥ ७ ॥
पचेन्मृद्वग्निना तावद्यावत्पाकमुपागतम् ।
शीतीभूते क्षिपेत्तस्मिंश्चातुर्जातपलत्रयम् ॥ ८ ॥
योजयेन्मात्रया दोषधात्वग्निबलसात्म्यतः ।
बल्यो वृष्यस्तथा हृद्यो धातुपुष्टिकरः परः ॥ ९ ॥
जीर्णज्वरहरश्चैव स्त्रियं चैव तु बृंहयेत् ।
छर्दितृषारुचिश्वासशोषहिध्माः सकामलाः ॥ १० ॥
हृद्रोगं पाण्डुगुल्मं च प्रदरं च त्रिदोषजम् ।
शोणितानिलकार्श्यं च रक्तपित्तं नियच्छति ॥ ११ ॥
सतताभ्यासयोगेन वलीपलितवर्जितः ।

क्षयादिरोगे रसाङ्कहरीतक्यवलेहः ।

हरीतक्याः शतं द्रोणे पयसि परिसाधयेत् ॥ १२ ॥
घृतावशेषमुत्तार्य निष्कुलीकृत्य च क्रमात् ।
रसगन्धकलोहानां चूर्णेनापूर्य वेष्टयेत् ॥ १३ ॥
सूत्रेण मासमेकं तु मधुमध्ये निधापयेत् ।
पथ्याशी भक्षयेदेकां सर्वरोगविमुक्तये ॥ १४ ॥

खण्डार्द्रकावलेहः ।

सुस्विन्नाच्छृङ्गवेरात्पलशतमनवं निस्तुषं संविधाय
प्रस्थे चाज्यस्य पक्त्वा पलशतसहितं शुद्धमत्स्यण्डिकायाः ।
कौरङ्गी देवपुष्पं मधुदलकणानागकिञ्जल्कभृङ्गं
शुक्काजाजी सघनमरिचतुगा सार्धकर्षद्वयाः स्युः ॥ १५ ॥
तस्मिन्नीरं विदित्वा ज्वलनमुखगतं पात्रमुत्तार्य यत्ना-
त्कृत्वा चेषन्मदशशिसुरभितं चूर्णितेनावचूर्ण्य ।
प्रातः शीतेऽतिमात्रं मधुकुडवयुगं सार्धमावाप्य सान्द्रं
तल्लीढं हन्ति जीर्णज्वरमथ कसनं राजयक्ष्माणमेव ॥ १६ ॥

अतीसारेऽङ्कोलमूलावलेहः ।

पलमङ्कोलमूलस्य दशांशं बिल्वमेव च ।
तद्भागो राजवृक्षस्य क्वाथ्यमष्टगुणे जले ॥ १७ ॥
तेन पादावशेषेण फाणितं कारयेद्भिषक् ।
शीतीभूते प्रदातव्यं मस्तुना सहितं बुधैः ॥ १८ ॥
फाणिते दीयमाने तु सत्वरं छर्दयेद्यदा ।
शीतलं भोजनं देयं दध्यन्नं भक्तमेव च ॥ १९ ॥
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ।
दुर्वारं ग्रहणीदोषं जयेच्चैव प्रवाहिकाम् ॥ २० ॥

अर्शसि भल्लातकावलेहः ।

पर्पटावल्गुजानन्तावचाखदिरचन्दनम् ।
पाठाशुण्ठीशठीभार्गीवासाभूनिम्बवत्सकम् ॥ २१ ॥

श्यामेन्द्रवारुणीमूर्वाविडङ्गेन्द्रयवं जलम् ।
हस्तिकर्ण्यमृताद्राक्षापटोलरजनीद्वयम् ॥ २२ ॥
कणारग्वधसप्ताह्वबिल्वश्योनाकपाटलाः ।
एषां द्विपलिकान् भागान् जलद्रोणे विपाचयेत् ॥ २३ ॥
अष्टभागावशेषं तु कषायमवतारयेत् ।
भल्लातकसहस्राणि छित्त्वा द्रोणमितेऽम्भसि ॥ २४ ॥
चतुर्भागावशेषं तु कषायं परिकल्पयेत् ।
तौ कषायौ समादाय वस्त्रपूतौ तु कारयेत् ॥ २५ ॥
गुडस्य च तुलां दत्त्वा लेहवत्साधयेद्भिषक् ।
भल्लातकसहस्राणां मज्जानं तत्र दापयेत् ॥ २६ ॥
त्रिकटुत्रिफलामुस्तसैन्धवानां पलं पलम् ।
सौगन्धिकस्य दातव्यं चूर्णं पलचतुष्टयम् ॥ २७ ॥
दीप्यकस्य पलं चैव चातुर्जातं पलांशकम् ।
संचूर्ण्य प्रक्षिपेत्कोष्णे घृतभाण्डे निधापयेत् ॥ २८ ॥
महाभल्लातको ह्येष महादेवेन निर्मितः ।
प्राणिनां च हितार्थं वै जयेच्छीघ्रं निषेवितः ॥ २९ ॥
श्वित्रमौडुम्बरं सिध्मं ऋक्षजिह्वं च काकणम् ।
पुण्डरीकं च चर्माख्यं विस्फोटं रक्तमण्डलम् ॥ ३० ॥
कृच्छ्रं कापालिकं कृष्णं पामां चैव विपादिकाम् ।
वातरक्तमुदावर्तं पाण्डुरोगं वमिं कृमिम् ॥ ३१ ॥
अर्शांसि षट्प्रकाराणि कासं श्वासं भगन्दरम् ।
समाभ्यासेन पलितमामवातं सुदुर्जयम् ॥ ३२ ॥
कुरुते च परां कान्तिं प्रदीप्तं जठरानलम् ।
अनुपाने प्रयोक्तव्यं छिन्नातोयं पयोऽथवा ।
भोजने च सदा त्याज्यमुष्णं चाम्लं विशेषतः ॥ ३३ ॥

